" जा य सच्चा अवत्तव्वा, सच्चामोसा य जा मुसा ।
जा य बुद्धेहिं नाइण्णा, न तं भासिज्ज पण्णवं ॥ १ ॥ "

—दशवैकालिके ( अ० ७, उ० २, सू० २ )

सम्यगेषणा—गवेषणमागमविधिना पिण्डादीनाम् । सम्यगादाननिक्षेपौ प्रत्युपेक्षाप्रमार्जनपूर्वकौ । सम्यगुत्सर्गः स्थण्डिले व्यपगतप्राणिके । इतिशब्दः स्वरूपप्रतिपादनार्थः । एवंस्वरूपाः **पञ्चैव समितयः** । तदेव स्वरूपं प्रदर्शयति—**तत्रे**त्यादि । तत्र—तासु समितिष्वीर्यासमिति-रित्थंरूपा आवश्यकार्यैवेति अवश्यकार्यमवश्यं कर्तव्यं यदागमचोदितं प्रयोजनं विहारादि-भूगमनं तदेव भूयः स्पष्टयति—**संयमार्थ**मिति । संयमः सप्तदशभेदः । तदेव चावश्यकमवश्यंतया कर्तव्यम् । **सर्वत** इति सर्वत्र युगप्रमिते भूप्रदेशे, पादाग्रादारभ्य यावद् युगमात्रं तावन्निरी-क्षणेत्यर्थः । **युक्त** आयुक्तस्तस्यैवं चेष्टमानस्य **शनैः** शनैः—मन्दं गतिभेदमकुर्वतोऽन्यासञ्चरण-योराचरत **ईर्यासमितिः** । आह च—

" उपयोगोद्योतालम्बनमार्गविशुद्धिभिर्यतेश्चरतः ।
सूत्रोदितेन विधिना भवतीर्यासमितिरनवद्या ॥ १ ॥ "

सम्प्रति भाषासमितिनिरूपणायाह—

**भा०—हितमितासन्दिग्धानवद्यार्थनियतभाषणं भाषासमितिः ॥**

**टी०—हितमिते**त्यादि । आत्मने परस्मै हितमायत्यामुपकारकं मुखवसनाच्छादिता-स्यता, नातिबहु प्रयोजनमात्रसाधकं मितं, असन्दिग्धं स्फुटम् अर्थवर्णप्रतिपत्तौ वा न सन्देहकारि **निरवद्यार्थ**मनुपघातकं षण्णां जीवकायानां एवंविधं च **नियतं** सर्वदैव **भाषणं भाषास-मितिः** । आह च—

" त्यक्तानृतादिदोषं सत्यमसत्यानृतं च निरवद्यम् ।
सूत्रानुयायि वदतो भाषासमितिर्भवति साधोः ॥ १ ॥ "

एषणासमितिस्वरूपावधारणायाह—

**भा०—अन्नपानरजोहरणपात्रचीवरादीनां धर्मसाधनानामाश्रयस्य चोद्ग-मोत्पादनैषणादोषवर्जनमेषणासमितिः ॥**

---

१ छाया—

या च सत्याऽवक्तव्या सत्यामृषा च या मृषा ।
या च बुद्धैरनाचरिता नेमां भाषेत प्रज्ञावान् ॥

२ 'रूपाश्रयस्य कार्ये०' इति च-पाठः । ३ 'आवश्यकार्यैवेत्या' इति ग-पाठः । ४ 'विदितं' इति ङ-पाठः । ५ 'युगप्रतीते भूप्रदेशे' इति ग-च-पाठः । ६ 'त्यक्त्वा' इति च-पाठः । ७ 'नुवीचि' इति च-पाठः ।

टी०—अन्नपानेत्यादि। अन्नं–अशन-खाद्य-स्वाद्यभेदम्। पानं आरनालतन्दुलक्षालनाद्युद्गमादिदोषपरिशुद्धम्। तथा रजोहरणं समुखवसनम्। पात्रद्वयम्। चोलपट्टकादि चीवरम्। आदिग्रहणाच्चतुर्दशविधोऽप्युपधिः स्थविरकल्पयोग्यो जिनकल्पयोग्यश्च सहौपग्रहिकेण ग्राह्यः। धर्मसाधनानामिति। श्रुतचरणधर्मसाधकानामित्यर्थः, साक्षात् पारम्पर्येण च। न हि पात्राद्यन्तरेण महाव्रतसंरक्षणं कर्तुं शक्यम्। एवमाहारोपकरणविषयामेषणां प्रतिपाद्य प्रतिश्रयैषणाभिधानायाह–आश्रयः शय्या। साऽप्युद्गमादिदोषरहितैव परिभोग्या। चशब्दः समुच्चितौ। तत्र षोडश आधाकर्मादय उद्गमदोषाः। उत्पादनादोषाः षोडशैव धात्र्यादयः। दशैषणादोषाः शङ्कितादयः। एतद्दोषपरिहारेणान्नपानादिग्रहणमेषणासमितिः।

"उत्पादनोद्गमैषणधूमाङ्गारप्रमाणकारणतः।
संयोजनाच्च पिण्डं शोधयतामेषणासमितिः॥ १॥"

आदाननिक्षेपसमितिस्वरूपविवक्षयाह—

भा०—रजोहरणपात्रचीवरादीनां पीठफलकादीनां चावश्यकार्थं निरीक्ष्य प्रमृज्य चादाननिक्षेपौ आदाननिक्षेपणासमितिः॥

टी०—रजोहरणेत्यादि। रजोहरणपात्रचीवरादीनामिति चतुर्दशविधोपधिग्रहणं[1] द्वादशविधोपधिपरिग्रहः[2], पञ्चविंशतिविधोपधिग्रहः, पीठफलकादीनामिति वा शेषौपग्रहिकोपकरणसङ्ग्रहणमावश्यकार्थमित्यवश्यन्तया वर्षासु पीठफलकादिग्रहः, कदाचिद्धेमन्तग्रीष्मयोरपि क्वचिदनूपविषये जलकणिकाकुलायां भूमावेवं द्विविधमप्युपधिं स्थिरतरमभिसमीक्ष्य प्रमृज्य च रजोहृत्या आदाननिक्षेपौ कर्तव्यावित्यादाननिक्षेपणासमितिः। आह च—

"न्यासाधिकरणदोषान् परिहृत्य दयापरस्य निक्षिपतः।
न्यासे समितिरथादाने च तथैवाददानस्य॥ १॥"

उत्सर्गसमितिस्वरूपकथनायाह—

भा०—स्थण्डिले स्थावरजङ्गमजन्तुवर्जिते निरीक्ष्य प्रमृज्य च मूत्रपुरीषादीनामुत्सर्ग उत्सर्गसमितिरिति॥ ५॥

टी०—स्थण्डिल इत्यादि। स्थानदानात् स्थण्डिलमुज्झितव्यवस्तुयोग्यो भूप्रदेशः। कीदृक् पुनस्तदवकाशं ददातीत्याह—स्थावरजङ्गमजन्तुवर्जितम्। तत्र स्थावराः सचित्ता[3] मिश्राश्च पृथिव्यादयः पञ्च। द्वीन्द्रियादयो जङ्गमाः। तद्वर्जिते निरीक्ष्य चक्षुषोपयुज्य प्रमृज्य च रजोहृत्या वस्त्रपात्रखेलमलभक्तपानमूत्रपुरीषादीनामुत्सर्ग[4]–उज्झनमुत्सर्गसमितिः। इतिशब्दः परिसमाप्तिवचनः। आह च—

---

१ 'ग्रहणं' इति छ-पाठः। २ 'परिग्रहः' इति छ-पाठः। ३ 'असचित्ता' इति च-पाठः। ४ 'खेलमलभक्त' इति ग-च-पाठः।

"न्यासादानसमित्या व्युत्सर्गे चापि वर्णिता समितिः ।
सूत्रोक्तेन (च) विधिना व्युत्सृजतोऽर्थं प्रतिष्ठाप्यम् ॥ १ ॥"
एवं साधोर्नित्यं यतमानस्याप्रमत्तयोगस्य ।
मिथ्यात्वाविरतिप्रत्ययं निरुद्धं भवति कर्म ॥ २ ॥" ॥ ५ ॥

अत्राह—उक्तं समितिगुप्तीनां संवरहेतुत्वम् । अधुना को धर्मः संवरस्य कारणम्? इति वक्तव्यम् । साध्वगारिधर्मभेदाहितसन्देहस्य प्रश्नः । उच्यते–सत्यप्यविशेषाभिधाने न पुण्यकर्म धर्मः, किं तर्हि ?, संवरापादनसामर्थ्यनिमित्तं यो धर्मः स उच्यते ।

धर्मस्य दशविधता

**सूत्रम्—उत्तमः क्षमा-मार्दवा-ऽऽर्जव-शौच-सत्य-संयम-तपस्त्यागा-ऽऽकिञ्चन्य-ब्रह्मचर्याणि धर्मः ॥ ९–६ ॥**

**टी०**—उत्तमग्रहणं अगारिधर्मव्यवच्छेदार्थम् । उत्तमो धर्मः प्रकर्षयोगात् । क्षमादयो हि उत्तमविशेषणविशिष्टास्तादृशाश्चागारिणो[1] न सन्ति । यतः सर्वावस्थां अनगाराः क्षमन्ते, सकलमदस्थाननिग्राहिणः शाठ्यरहिताः सन्तोषामृततृप्ताः सत्यवादिनः संयमिनः तपस्विनो यथावद् दातारः कनकादिकिञ्चनरहिताः सर्वप्रकारं ब्रह्म बिभ्रतीति ॥ न त्वेवं जातुचिद् गृहिणां क्षमादयः प्रकर्षभाजो भवन्ति । क्षमादयः कृतद्वन्द्वाः प्रथमाबहुवचननिर्दिष्टाः समुदिता एवोत्तमो धर्मः । एष च क्षमादिसमुदयः संवरं धारयति करोति यतस्ततो धर्मः । संवरार्थं चात्मना धार्यत इति धर्मः ।

एतावन्ति धर्माङ्गानि तन्निष्पादितश्च धर्म इति दर्शयति—

**भा०**—इत्येष दशविधोऽनगारधर्म उत्तमगुणप्रकर्षयुक्तो भवति ॥

**टी०**—एवमेष दशप्रकारो यतिधर्मः । उत्तमा गुणा मूलोत्तराख्यास्तेषां प्रकर्षः–पराकाष्ठा तद्युक्तोऽनगाराणां धर्मो भवति ॥

क्षमायाः पर्यायाः

**भा०**—तत्र क्षमा तितिक्षा सहिष्णुत्वं क्रोधनिग्रह इत्यनर्थान्तरम् ॥

**टी०**—तत्र क्षमेत्यादिना विवृणोति । उत्तमत्वं क्षमेति क्षमणं–सहनं परिणाम आत्मनः शक्तिमतः । अशक्तस्य वा प्रतीकारानुष्ठाने तां पर्यायशब्दैराचष्टे । तितिक्षा क्षान्तिः । सहिष्णुत्वं सहनशीलत्वम् । क्रोधनिग्रहः क्रोधस्योदयनिरोधः, उदितस्य वा विवेकबलेन निष्फलताऽऽपादनम् । एवमेतेऽनर्थान्तरवाचिनः शब्दाः क्षमामेवाभिदधति ।

भाष्यकारस्तु स्वयमेवाशङ्क्याह—

**भा०**—तत् कथं क्षमितव्यमिति चेदुच्यते—क्रोधनिमित्तस्यात्मनि भावाभावचिन्तनात् ॥

---

1 'दशागारिणि' इति ग-पाठः ।

**टी०—तत् कथं क्षमितव्यमिति चेत्।** क्षमितव्यमिति भावे कृत्यः। क्षमाऽपि भाव एव। अतः सामान्यमात्रमाश्रित्य तच्छब्दप्रयोगः। वाक्यार्थस्तु—सा—क्षमा कथं—केन प्रकारेण कर्तव्या ?। एवं मन्यते दुर्भञ्जः क्रोधवेगो मदाकुलस्येव करिणः। चेच्छब्दः शङ्कायाः सूचकः। एवमाशङ्किते आशङ्काव्युदासचिकीर्षया आह—**उच्यत इति। क्रोधनिमित्तस्यात्मनि भावाभावचिन्तनात्।** भावः सद्भावोऽस्तित्वं तच्चिन्तनात् तदुपयोगात् उभयथाऽपि क्रोधो न घटत इति। येन निमित्तेन परप्रयुक्तेनायं मम कोप उत्पद्यते तन्निमित्तं मयि किं सत्यमेवास्ति उताभ्याख्याति परः ?, यदि सत्यमस्त्येतन्निमित्तं किं कोपेन ? कृतं खलु मयेदं, नाणीयोऽपि परस्यात्राऽऽगः सद्भूतमर्थं प्रकाशयतः, स्वकृतं हि दुश्चरितं तपतीत्येवं चिन्तयेत्। एतदेवाह—**भावचिन्तनात्।** तावद् विद्यन्ते मय्येते दोषाः किमत्रासौ मिथ्या ब्रवीतीति क्षमितव्यं, तथाऽभावचिन्तनादपि क्षमितव्यमित्यादि, ये दोषाः परेणोपक्षिप्यन्ते मयि नैते विद्यन्ते। अभाव एव, परस्त्वज्ञानादेवमभिधत्ते। अज्ञात्वैव[1] दोषानुपक्षिपतीत्यर्थः। एवं च निरपराधमात्मानमवेत्य क्षन्तव्यमेव॥ **किञ्चान्यदालम्बनं सहिष्णुत्वे** इत्याह—

**भा०—परैः प्रयुक्तस्य क्रोधनिमित्तस्यात्मनि भावचिन्तनादभावचिन्तनाद्[2] वा क्षमितव्यम्। भावचिन्तनात् तावद् विद्यन्ते मयि एते दोषाः किमत्रासौ मिथ्या ब्रवीतीति क्षमितव्यम्। अभावचिन्तनादपि[3] क्षमितव्यम्, नैते विद्यन्ते मयि दोषा यानज्ञानादसौ ब्रवीतीति क्षमितव्यम्। किञ्चान्यत्॥**

टी०—गतार्थमेवेदं भाष्यम्।

क्षमाकरणे अन्यान्यालम्बनानि

**भा०—क्रोधदोषचिन्तनाच्च क्षमितव्यम्। क्रुद्धस्य हि विद्वेषासादनस्मृतिभ्रंशव्रतलोपादयो दोषा भवन्तीति[4]। किञ्चान्यत्॥**

**टी०—क्रोधदोषचिन्तनाच्चेत्यादि।** क्रुद्धः—कषायपरिणतो विद्वेषी कर्म बध्नाति, परं वा निहन्ति व्यापादयति वा। अतः प्राणातिपातनिवृत्तिव्रतलोपः स्यात्, गुरूनासादयेद्—अधिक्षिपेत्, अतो ज्ञानादिनिर्वाणसाधनपरिहाणिरवश्यंभाविनी। क्रुद्धो वा भ्रष्टस्मृतिको मृषाऽपि भाषेत, विस्मृतप्रव्रज्याप्रतिपत्तिः परेणादत्तमप्याददीत, द्वेषात् परपाखण्डिनीषु ब्रह्मव्रतभङ्गमप्यासेवेत[5]। तथा प्रद्विष्टः सहायबुद्ध्या गृहस्थेष्वविरतेषु मूर्च्छामपि कुर्यात्। आदिग्रहणाद् उत्तरगुणभङ्गमप्याचरेत् कारट्टक(करट्टक?)भक्तालाभे मासक्षपकवत्॥ **किञ्चान्यदालम्बनं क्षान्तावित्याह—**

---

१ 'अज्ञात्वैव' इति ग-च-पाठः। २ 'नाद् वा' इति घ-पाठः। ३ 'दपि नैते मयि' इति ग-पाठः। ४ 'भवन्तीति' इति घ-पाठः। ५ 'भञ्जना' इति ग-पाठः।

**भा०—बालस्वभावचिन्तनाच्च परोक्षप्रत्यक्षाक्रोशताडनमारणधर्मभ्रंशानामुत्तरोत्तररक्षार्थम्। बाल इति मूढमाह। परोक्षमाक्रोशति बाले क्षमितव्यमेव। एवंस्वभावा हि बाला भवन्ति। दिष्ट्या च मां परोक्षमाक्रोशति न प्रत्यक्षमिति लाभ एव मन्तव्यः। प्रत्यक्षमप्याक्रोशति बाले क्षमितव्यम्। विद्यत एवैतद् बालेषु। दिष्ट्या च मां प्रत्यक्षमाक्रोशति, न ताडयति, एतदप्यस्ति बालेष्विति लाभ एव मन्तव्यः। ताडयत्यपि बाले क्षमितव्यम्। एवंस्वभावा हि बाला भवन्ति। दिष्ट्या च मां ताडयति, न प्राणैर्वियोजयतीति। एतदपि विद्यते बालेष्विति। प्राणैर्वियोजयत्यपि बाले क्षमितव्यम्। दिष्ट्या च मां प्राणैर्वियोजयति, न धर्माद् भ्रंशयतीति क्षमितव्यम्। एतदपि विद्यते बालेष्विति लाभ एव मन्तव्यः। किञ्चान्यत—**

टी०—**बालस्वभावे**त्यादि। बालशब्दोऽवैधेयवचनः, न वयोऽवस्थावाची। तथैव चाह भाष्यकृत्। बालः मूढो निर्विवेक इत्यर्थः। तस्य चैष एव स्वभावो मूढत्वात् यत्किञ्चनभाषित्वं तत्स्वभावालोचनमन्वेषणं, अतस्तच्चिन्तनाच्च क्षमितव्यमेव। चशब्दः समुच्चयार्थः। **उत्तरोत्तररक्षार्थमिति** परोक्षाक्रोशात् प्रत्यक्षाक्रोशनमुत्तरं, प्रत्यक्षाक्रोशनात् ताडनं, ताडनान्मारणं, मारणाद् धर्मभ्रंशनं, परोक्षाक्रोशेन क्षमायां प्रत्यक्षाक्रोशनं रक्षितं भवति। एवमुत्तरत्रापि, अस्ति हि कियत्यपि मन्दाक्षमाक्रोष्टुमयि ततः परोक्षमाक्रोशति, न प्रत्यक्षम्। दिष्ट्येति तृतीयैकवचनप्रतिरूपको निपातः प्रसादवचनः प्रशंसावचनो वा। अयमेव च प्रसादो मम—इदमेव वा साधु यन्मां परोक्षमाक्रोशति, न प्रत्यक्षमित्येष एव लाभः। लौकिकः खलु अयमाभाणकः—अयमेव (मे) लाभ इति, एवं सर्वत्र व्याख्या। **किञ्चान्यदा**लम्बनमाश्रित्य क्षमा कार्या तदभिधीयते—

**भा०—स्वकृतकर्मफलाभ्यागमाच्च। स्वकृतकर्मफलाभ्यागमोऽयं मम, निमित्तमात्रं पर इति क्षमितव्यम्। किञ्चान्यत्—**

टी०—**स्वकृतफलाभ्यागमाच्चे**ति। जन्मान्तरोपात्तस्य कर्मणः स्वकृतस्यायं विपाको मम यदाक्रोशति ताडयति वा परः, स तु **निमित्तमात्रं** कर्मोदयस्य। यस्माद् द्रव्यक्षेत्रकालभवभावापेक्षः कर्मणामुदयो भगवद्भिराख्यातः। स्वकृतं च कर्मानुभवितव्यमवश्यन्तया निकाचितं, तपसा वा क्षपणीयमिति। किञ्चान्यदालम्बनं क्षन्तुमनसा विधातव्यमित्याह—

**भा०—क्षमागुणांश्चानायासादीननुस्मृत्य क्षमितव्यमेवेति क्षमाधर्मः॥ १॥**

---

१ 'विधेयं' इति च-पाठः।

**टी०—क्षमागुणांश्चेत्यादि** । क्षमाया गुणाः ज्ञानादिवृद्धिहेतवोऽनायासादयः । तांश्चानुचिन्त्य क्षमामेव विदधीत । **आयासो**–दुःखहेतुश्चेष्टाविशेषः प्रहरणसहायान्वेषणं संरम्भावेशारुणविलोचनस्वेदद्रवप्रवाहप्रहारवेदनादिकः । तद्विपरीतोऽनायासः–स्वस्थता । आदिग्रहणात् तत्प्रत्ययकर्मप्रायश्चित्ताभावः शुभध्यानाध्यवसायिता परसमाधानोत्पादनं स्तिमितप्रसन्नान्तरात्मत्वमित्यादयः । इत्थमनुस्मरतो गुणाः सम्पद्यन्ते क्षममाणस्य, **क्षमितव्यमिति** क्षमाधर्मः । तथा मार्दवधर्मः मृदुः–अस्तब्धस्तद्भावस्तत्कर्म वा मार्दवम् । तल्लक्षणप्रदर्शनायाह—

**भा०—नीचैर्वृत्त्यनुत्सेकौ मार्दवलक्षणम् । मृदुभावो मृदुकर्म वा मार्दवं, मदनिग्रहो मानविघातश्चेत्यर्थः । तत्र मानस्येमान्यष्टौ स्थानानि भवन्ति ॥**

**टी०—नीचैर्वृत्त्यनुत्सेकाविति** । नीचैर्वृत्तिः–अभ्युत्थानासनदानाञ्जलिप्रग्रहयथार्हविनयकरणरूपा नीचैर्वर्तनम् । उत्सेकश्चित्तपरिणामो गर्वरूपस्तद्विपर्ययोऽनुत्सेकः । संसारस्वभावं भावयतोऽसमञ्जसविशिष्टजातिकुलादिसम्पदः कदाचिदेवासाद्यन्ते कदाचिद्धीनास्ततो न गर्वपरिणाममास्कन्दतीत्येतदेवाह—**मदनिग्रह** इत्यादि । माद्यत्यनेनेति मदः जात्यादिमदस्तस्य ( निग्रहः उदयनिरोधः कदाचिदुदितस्य वा वैफल्यापादनं मानो-मूलप्रकृतिः यद्विजृम्भणादेते प्रादुष्षन्ति जात्यादिमदास्तस्य ) च निर्घातो मूलोत्कर्तनमित्यर्थः । तद्घाते चावश्यम्भावी जात्यादिमदविनाशः । तन्निरूपणार्थमाह–**तत्र मानस्येत्यादि** । **तत्रेति** वाक्योपन्यासार्थः । **स्थानानि** भेदाः । **इमानीति** प्रत्यक्षीकरोति । परस्यानुभवमुत्पादयति—

अष्टविधता मानस्य

**भा०—तद्यथा—जातिः १ कुलं २ रूपम् ३ ऐश्वर्यं ४ विज्ञानं ५ श्रुतं ६ लाभः ७ वीर्यम् ८ इति ॥**

**टी०—तद्यथेत्यादिनोदाहरति** । जात्यादीनि वीर्यान्तान्यष्टौ स्थानानि । तत्र **जातिः** पित्रन्वयः प्रख्याततमवंशता जातिर्जन्मात्मलाभः पञ्चेन्द्रियादिलक्षणा वा तया गर्वमुद्वहति विशिष्टजातिरहमिति । विदितकर्मपरिणामस्तु निरुणद्धि जातिमदं, स्वकृतकर्मफलानुभाजो जीवा नानाजातीरुच्चावचाः प्रपद्यन्ते इति न श्रेयान् जातिमदः । मात्रन्वयः **कुलं** उग्रभोजादि वा । तेनापि मदो न युक्तएव जात्यादिभावनावदिति । **रूपं** शरीरावयवानां सन्निवेशविशेषो लावण्ययुक्तस्तेनापि कश्चिन्माद्यति, तत्प्रतिषेधस्त्वाद्युत्तरकारणालोचनाद् भवति । तत्राद्यं कारणं मातुरोजः पितुः शुक्रम्, उत्तरकारणं जननीग्रस्तान्नपानरसाभ्यवहारो रसहरण्येत्येवमामृशतो न प्रतिभाति रूपमदः । त्वग्-मांसा-ऽस्थि-पुरीष-पूयाद्यशुभप्रायत्वात् । ऐश्वर्यमदो

---

१ 'प्रख्य' इति च-पाठः । २ 'च' इति घ-पाठः । ३ 'जन्मात्मा जातः पञ्चेन्द्रिया०' इति च-पाठः । ४ 'भोगादि' इति च-पाठः । ५ 'षेधमुत्तर०' इति ङ-पाठः ।

धनधान्यसम्पत्प्रभवः । धनं रजत-चामीकर-मरकतादि गो-महिष्य-ऽजाविकादि च, व्रीहि-तिल-मुद्ग-माष-कङ्ग्वादि धान्यं तेनापि कर्मानुभावादप्राप्तेन प्राप्तेन वा संरक्ष्यमाणेन क्लेशकारिणा अकाण्डभङ्गुरेणाऽऽयत्यामायासबहुलेन को मद इत्येवं प्रत्याचक्षीत ॥ वाचकेन त्वेतदेव

प्रशमरतौ मतान्तरम्　बलसंज्ञया प्रशमरतावुपात्तम् । तच्च त्रिधा-शरीर-स्वजन-द्रव्य-बलम् । इहैश्वर्यग्रहणात् स्वजनद्रव्यबलपरिग्रहः । शरीरबलं तु वीर्यग्रहणात् पृथग् गृहीतं वीर्यबलस्य प्राधान्यप्रकाशनार्थम् । विज्ञानं-बुद्धिश्चतुर्विधा-औत्पत्तिकी, वैनयिकी, कर्मजा, पारिणामिकी चेति । तत्रौत्पत्तिकी अदृष्टाश्रुतपूर्ववस्तुन्युपनते तत्क्षण एव समासादितो-

औत्पत्तिकीप्रमुख-बुद्धिचतुष्टयम्　पजना (?) अव्याहतफला भरतरोहकादेरिव भवति । गुर्वादिविनयानु-ष्ठानाभ्यासविशेषप्रभवा वैनयिकी ऐहिकामुष्मिकफलसम्पादिनी प्रस्तुत-कार्यनिस्तरणसमर्था धर्मादित्रिवर्गशास्त्रार्थग्राहिणी च पुत्रागमनकाणहस्तिनीपरिज्ञाननैमित्तिक-स्येव । कर्मजा पुनः धीः साधुकारफला, अनाचार्यकं कर्म, तत्र पुनःपुनरुपयोगात् प्रतिक्षण-मभ्यस्यतस्तादृशी बुद्धिरुत्पद्यते येन प्रथमादिकृतकर्मातिशायि पाश्चात्यं कर्मोपजायते, सौवर्णि-ककृषीवलतन्तुवायादेरिव । पारिणामिकी तु वयोविपाकलब्धजन्मा परमहितनिःश्रेयसफला पश्चावयवादिसाधनानुसारिणी भवत्यभयकुमारादेरिव यथासम्भवम्[2]। इत्थं लब्धया बुद्ध्या अहमेव बुद्धिमानिति मन्यमानः परिभवति शेषं जनम् । मदसमुद्धतस्य परपरिभवपरि-वादादात्मोत्कर्षाच्चाशुभं कर्म नीचैर्गोत्रादि बन्धमेति यदनेकभवपरम्परासु परिनिष्ठास्यतीति सापायमवग(म)त्य बुद्धिगर्वमित्थं विचिन्तयेत्-बुद्धयो हि विनयाधानहेतवः सर्वदा, न जातु-चित् अहङ्कारस्य कारणीभवन्ति । मानपरस्य च विनयखण्डनमवश्यम्भावि । विनयहीनस्य च धर्मतपसी निष्फले स्यातामिति विज्ञानमदो[3] यत्नेन महता विवर्जनीयः । श्रुतम्-आप्तप्रणीत आगमः तत्परिज्ञानान्माद्यति अहमेवैको जाने, नापर इति । श्रुतमदान्धश्च बालिशमेव परं मन्यते, श्रुतमदं च निजिघृक्षुरित्थमालोचयेत्-प्रकर्षापकर्षवृत्तित्वात् क्षयोपशमस्य सन्ति मत्तो-ऽन्येऽपि बहुश्रुताः, कदाचिदहमन्ये[4]भ्योऽल्पतरश्रुतोऽतिगहनार्थत्वादागमानामधिगतश्रुतोऽपि वा दुरधिगततदर्थः स्यामिति[5] श्रुतमदत्यागः श्रेयान् । अपि च-चतुर्दशपूर्वधरेष्वपि षट्स्थानक-मवघुष्यते यदि, तत्र का कथा शेषश्रुतधरे श्रुतज्ञानावरणक्षयोपशमवैचित्र्याद्, अधिगतसकल-

---

१ उक्तं च तत्र—

जाति-कुल-रूप-बल-बुद्धि-वाल्लभ्यक-श्रुतमदान्धाः ।
क्लीबाः परत्र चेह च हितमप्यर्थं न पश्यन्ति ॥ ८० ॥

२ सन्तुलयतां यदुक्तं नमस्कारनिर्युक्तौ हारिभद्रीये तद्विवरणे च ( ४१४-४३५ पत्राङ्केषु ) ।

३ 'मादाय' इति च-पाठः । ४ 'भ्योऽलभ्यतर' इति च-पाठः । ५ 'स्यादिति' इति ङ-पाठः ।

श्रुतेनापि परिहार्यः श्रुतमद इति। लम्भनं लाभः—प्राप्तिर्विशिष्टफलस्य सत्कारसन्मानादेः नृपतिसन्मित्रभृत्यस्वजनेभ्यो विज्ञान-तपो-ऽभिजन-शौर्याद्याधिक्यादहं लभेयं, अपरः प्रयत्नवानपि न लभत इति स्वलाभेन माद्यति। तथा सकलजनवल्लभतां च प्राप्तोऽहं, अयमपरो न कस्मैचिद् रोचते, वचनमप्यस्य नादरयन्तीति सर्वोऽप्ययं लाभमदः। स चैवं निगृहीतव्यो लाभान्तरायकर्मोदयादलाभो लाभान्तरायकर्मक्षयोपशमाच्च सत्कारादिलाभः, संसारे परिभ्रमतो जीवस्य कादाचित्को न तु शाश्वतः, कर्मायत्तत्वात्, संसारानुबन्ध्येवेति लाभमदत्यागः श्रेयस्करः। वाल्लभ्यकप्राप्तिरपि कर्मोदयजनितैव, संसारिणां च सुलभेति वाल्लभ्यकलाभमदः परिवर्जनीय इति। वीर्य—पराक्रमः शक्तिरुत्साहः सामर्थ्यमतिशयवती चेष्टेति पर्यायाः। वीर्यान्तरायक्षयोपशमात् प्रादुरस्ति वीर्य-बलविशेषस्तेन वीर्येण माद्यतीति वीर्यमदः, तस्य प्रतिक्षेपः संसारानुबन्धित्वचिन्तनात्, संसारानुबन्धी वीर्यमदः कषायरूपत्वात्, वीर्यस्य चाशाश्वतत्वात्। तथाहि—बलिनोऽपि पुरुषाः क्षणेन निर्बलतामुपयन्तो दृश्यन्ते, निर्बलाश्च बलवन्तः संस्कारवशादाशु जायन्ते, तथा व्याधि-जरा-मृत्युपूद्भूतबलेषु चक्रवर्तिहरिसीरिणोऽपि सीदन्ति ससुरासुराः, किमुतान्ये पृथग्जना इति? वीर्यमदाद् व्युपरमः श्रेयान्। इतिशब्दो मदस्थानानामियत्तामावेदयति। मौलान्येतावन्ति, सूक्ष्मभेदास्तेषां भूयांस इति॥

सम्प्रति सामान्येन सर्वमदस्थानेषु दोषानाविर्भावयन्नुपसंहरति—

**भा०—एभिर्जात्यादिभिरष्टाभिर्मदस्थानैर्मत्तः परात्मनिन्दाप्रशंसाभिरतः तीव्राहङ्कारोपहतमतिरिहामुत्र च अशुभफलमकुशलं कर्मोपचिनोति। उपदिश्यमानमपिच श्रेयो न प्रतिपद्यते। तस्मादेषां मदस्थानानां निग्रहो मार्दवं धर्म इति॥ २॥**

टी०—एभिर्जात्यादिभिरित्यादि। उक्तलक्षणैर्जात्यादिभिर्मत्तः—अहंमानी परनिन्दायामात्मप्रशंसायां च सक्तस्तीव्रेण—अतिशयवताऽहङ्कारेणोपहतबुद्धिर्मलीमसधिषण इहपरलोकानुभवनीयं कर्मोपचिनोति—बध्नाति अकुशलं—पापमशुभफलम्, अकुशलमपि बद्धं कदाचित् कुशलफलतया परिणमत इत्यशुभफलग्रहणम्। सम्यग्दर्शनादि मुक्तिसाधनं श्रेयः। तच्चाख्यायमानमपि न प्रतिपद्यते—न श्रद्धत्ते। यत एतदेवं तस्मादेषां मदस्थानानां मार्दवं निग्राहकं, तन्निग्रहाच्च धर्म इति॥

सम्प्रति मायाप्रतिपक्षमार्जवं लक्षयति—

**भा०—भावविशुद्धिरविसंवादनं चार्जवलक्षणम्। ऋजुभावः ऋजुकर्म**

---

१ 'प्रभृत्य' इति ङ-पाठः। २ 'लभेयमपर' इति घ-पाठः। ३ 'बन्धिचिन्तनात्' इति ग-पाठः। ४ 'विबलतां' इति-ख-पाठः। ५ 'कुशलतया' इति ङ-च-पाठः। ६ 'श्रद्दधते' इति ङ-पाठः।

**वाऽऽर्जवम् । भावदोषवर्जनमित्यर्थः । भावदोषयुक्तो हि उपधिनिकृतिसंप्रयुक्त इहामुत्र चाशुभफलमकुशलं कर्मोपचिनोति । उपदिश्यमानमपि च श्रेयो न प्रतिपद्यते । तस्मादार्जवं धर्म इति ॥ ३ ॥**

**टी०—भावविशुद्धिरिति** । भावाः—कायवाङ्मनसानि तेषां विशुद्धिः—अवक्रत-शाठ्यविरहितत्वम्, मनसोऽपि परिणामः कायवाचोरुपचर्यते तद्वृत्तानुवृत्तेः । मायावी तु सर्वाभिसन्धानपरतया सर्वाभिशङ्कनीयः [1]कपटपटप्रच्छादितकायादिक्रियः सुहृदेऽपि द्रुह्यति ।

तमेव योगानामविपर्यासं दर्शयति **ऋजुभाव** इत्यादिना। उपधिनिकृत्योर्विशेषः—उपधिः छद्म छादनं स्वाभिसन्धेः निकारो निकृतिः परबुद्धिपराभवद्वारेण स्वाभिसन्धेः साफल्या-पादनम् । अविसंवादनमविनाशनं अहिंसनमित्यनर्थान्तरम् । विनाशनं—परिणामान्तरापादनं विसंवादनमुच्यते । न विसंवादनमविसंवादनम्, परिणामान्तरानापादनमिति । तस्मादेवं-विधमार्जवं धर्मः ॥

अधुना लोभप्रतिपक्षं शौचलक्षणमाविर्भावयन्नाह —

**भा०—अलोभः शौचलक्षणम् । शुचिभावः शुचिकर्म वा शौचम् ॥**

**टी०—अलोभ इति । अलोभः** शौचलक्षणम् । लोभस्तु भावतः परमार्थतोऽ-भिष्वङ्गश्चेतनाचेतनमिश्रवस्तुविषयः । लोभदोषाच्च क्रोधमानमायाहिंसाऽनृतस्तेयाऽब्रह्मपरि-ग्रहार्जनमलजालेनोपचीयमान आत्मा भवत्यशुचिः । तत्रालोभो—लोभाभावो न कचिन्मम-त्वम् । अलोभस्य हि लोभदोषविनिर्मुक्तत्वान्निर्भयत्वम् । ततः स्वपर[2]हिताभिप्रवृत्तिरि-त्येतदेव शौचलक्षणं मुख्यमात्मनः ।

एतदेव स्पष्टयति—

**भा०—भावविशुद्धिर्निष्कल्मषता । धर्मसाधनमात्रास्वपि अनभिष्वङ्ग इत्यर्थः । अशुचिर्हि भावकल्मषसंयुक्त इहामुत्र चाशुभफलमकुशलं कर्मोप-चिनोति, उपदिश्यमानमपि च श्रेयो न प्रतिपद्यते । तस्माच्छौचं धर्म इति ॥ ४ ॥**

**टी०—भावविशुद्धिर्म**मत्वाभावो निःसङ्गता च, अपरद्रोहेणात्मार्थानुष्ठानं, निष्कल्म-षता—निर्मलता भाव( धर्म ? )**साधनमात्राः**-रजोहरण-मुखवस्त्रिका-चोलपट्टक-पात्रादिलक्षणाः **तास्वप्यनभिष्वङ्गो** विगतमूर्च्छे इत्यर्थः । यस्मादशुचिर्भावकल्मषसंयुक्तः, भावकल्मषं च लोभकषायस्तस्मात् तत्त्यागः । **शौचं धर्म** इति, शरीरम[3]हाव्रणप्रक्षालनादि द्रव्यशौचं, तच्च प्रासुकैषणीयेन जलादिना निर्लेपनिर्गन्धितापादनमागमोक्तेन विधिना कार्यमिति ॥

---

1 'कपटप्रच्छादित' इति क-पाठः । 2 'हिताहिताभि' इति क-पाठः । 3 'महावर्णे' इति च-पाठः ।

अवसरप्राप्तं पञ्चमं धर्माङ्गं निर्दिदिक्षुराह—

**भा०—सत्यर्थे भवं वचः सत्यं, सद्भ्यो वा हितं सत्यम्, तदननृतम्, अपरुषमपिशुनमनसभ्यमचपलमनाविलमविरलमसम्भ्रान्तं मधुरमभिजातमसन्दिग्धं स्फुटमौदार्ययुक्तमग्राम्यपदार्थाभिव्याहारमसीभरमरागद्वेषयुक्तम् ॥**

**टी०**—सन्–विद्यमानोऽर्थोऽनेकधर्मा तस्मिन् सत्यर्थे भवं, दिगादित्वात् यत्, यथाऽवस्थितार्थप्रतिपत्तिकारि सत्यम् ॥ नन्वेवं सति लुब्धकाय मृगाख्यानमपि सत्यं स्यात्, किं (एवं ?) तर्हि सच्छब्दः प्रशंसार्थः । प्रशस्तोऽर्थः सन् न पापहेतुः तस्मिन् सति भवं सत्यं, पक्षान्तरसमाश्रयणं वा, सद्भ्यो वा हितं सत्यमिति, सन्तो जीवा एव गृह्यन्ते, हितशब्दोपादानात्। न ह्यजीवसम्बन्धि किञ्चिद्धितमस्ति, अतोऽप्रशस्तार्थव्यावृत्तिः । सामान्येन वा जीवाजीवेभ्यो हितम्। अनेकपर्यायकलापभाजोऽर्थाः । तेषां यथाऽवस्थितविवक्षितपर्यायप्रतिपादनं सत्यं, एतदेव तेभ्यो हितं यद् यथार्थप्रतिपादनमिति, तस्येदानीं सत्यवचनस्य विशेषगुणानाचष्टे–तदनृतमिति । अनृतं–भूतनिह्नवः अभूतोद्भावनं विपरीतकटुकसावद्यादिवचनं, नानृतम्। ननु च सत्यपर्याय एवायम्। सत्यमेतत्, तथापि वक्ष्यमाणोत्तरगुणप्राप्त्यर्थं[1] पुनर्वचनम्। परुषं–रूक्षं स्नेहरहितं (निष्ठुरं) परपीडाकारि । न परुषमपरुषम्। तत्राविनयेषु माध्यस्थ्यभावना, विनयेषु तु सौम्या वागपरुषम्, पिशुनं–प्रीतिविच्छेदकारि द्वयोर्बहूनां वा सत्यासत्यदोषाख्यानात्। न पिशुनमपिशुनम्। सभार्हं–सभ्यं, न सभार्हमसभ्यं–सभासु विगर्हितं विदग्धसभासु गुह्यप्रकटनामोद्घाटनवचनवत्। तस्य प्रतिषेधो नामभ्यमनसभ्यम्। चपलः–अनालोचितभाषी, तद्वचनमपि चपलं, तच्च दोषाक्षेपि भवति। आविलं–कलुषं, कषायवशवर्तिनो वचनं न आविलमनाविलं, प्रसन्नवचनमितियावत्। विरलं–विश्रम्यभाषणम्। सविच्छेदत्वाच्च श्रोतुरनादरवाक्यव्याहरणाच्छ्रवणवैरस्यं करोति। न विरलमविरलमनुसन्ततमिति। सम्भ्रान्तं[2] तु त्रासकरं, न सम्भ्रान्तमसम्भ्रान्तं अतित्वरितं वा सम्भ्रान्तमनुच्छ्वसन्[3] भाषते च यत् अव्यक्तवर्णपदलोपत्वादप्रत्यायकं वा श्रुतिविरसाक्षरमप्ररोचकमेव स्यात्। मधुरमिति प्रसन्नपदघटितं श्रुतिसुखं, सुखावबोधार्थं च अनभिमानं[4]–विनयसहितं अभिजातं-सप्रश्रयं सविनयं सन्दिग्धम्–आकाङ्क्षाविनिवर्तने अक्षमं, तद्विपरीतमसन्दिग्धमाकाङ्क्षाविच्छेदकारि, निराकाङ्क्षमिति। अस्फुटम् अनिश्चितार्थत्वादालूनविशीर्णप्रायं, (वि)निश्चितार्थं[5] तु स्फुटम्। अनौदार्यम्–अत्यौद्धत्यप्रदीपकं, तद्विपरीतमौदार्यम्। अप्रधानार्थं अनौदार्यं उदारार्थप्रतिबद्धत्वादुदारं तद्भाव औदार्यं तद्युक्तमौदार्ययुक्तम्। विद्वज्जनमनोऽनुरञ्जनेऽसमर्थं ग्राम्यं, न

---

१ 'व्याप्त्यर्थं' इति च–पाठः। २ 'न्तमुत्रास' इति च–पाठः। ३ 'अनुच्छ्वसं' इति क–पाठः।
४ 'अनभिमतमविनय' इति च-पाठः। ५ 'मविनिश्चिता' इति क-पाठः।

ग्राम्यमग्राम्यम् । पदार्थांश्च विवक्षितानभिव्याहरतीति पदार्थाभिव्याहारम्, अग्राम्यत्वात् पदार्थानभिव्याहरतीति । विद्वज्जनाभिमतानित्यग्राम्यपदार्थाभिव्याहारं, सीभरं विकत्थनं विमर्दकरं, न सीभरमसीभरं आश्वेव प्रस्तुतार्थपरिसमाप्तिकारि । अरागद्वेषयुक्तमिति मायालोभाभ्यां कोपमानाभ्यां चायुक्तम् ॥

**भा०—सूत्रमार्गानुसारप्रवृत्तार्थमर्थ्यमर्थिजनभावग्रहणसमर्थमात्मपरार्थानुग्राहकं निरुपधं देशकालोपपन्नमनवद्यमर्हच्छासनप्रशस्तं यतं मितं याचनप्रच्छनं प्रश्नव्याकरणमिति सत्यधर्मः ॥ ५ ॥**

टी०—सूचनात् सूत्रं–गणधरप्रत्येकबुद्धस्थविरग्रथितं तस्य यो मार्गः–उत्सर्गापवादलक्षणः तदनुसारेण प्रवृत्तार्थं–प्रस्तुतार्थात्[1] अनपेतं अर्थं शुश्रूषुर्जनोऽर्थी तस्य भावः–चित्तं तद्ग्रहणसमर्थं–तदावर्जनसमर्थम् । तदेवंविधमात्मपरानुग्रहसमर्थं भवति । निरुपधं मायारहितम् । उपधा–भावदोषः । देशे यद् यत्र यस्यार्थस्य प्रसिद्धं तद्देशोपपन्नमविरुद्धम्, कालोपपन्नं यद् यत्र काले भण्यमानं न परस्योद्वेगकारि भवति, प्रस्तावापेक्षमित्यर्थः । अनवद्यम्–अगर्हितम् । अर्हच्छासनं द्वादशाङ्गं प्रवचनं तत्र तेन वा प्रशस्तम् अनुजातं यत् तत् प्रयत्नसहितो मुखवसनाच्छादितवदनविवरः पाणितलस्थगितमुखो वा[2] । मितमिति यावता विवक्षितकार्यप्रतिपत्तिस्तावदेव, न त्वपरिमितं, याचनमभीक्ष्णावग्रहादिविषयं, प्रच्छनमुत्पन्नसन्देहस्य मार्गादिसूत्रार्थविषयं प्रश्नव्याकरणमन्येन पृष्टः प्रवचनाविरुद्धं व्याकरोतीति । तदेवमनृतपरुषाद्यपोह्य तद्विपर्ययेण सत्यमन्वेष्यमिति । याचनप्रच्छनप्रश्नव्याकरणेषु च त्रिष्वेव प्राधान्येन साधोर्वाग्व्यापारो, नान्यत्र निष्प्रयोजनत्वात्, स्वाध्यायवाचनाद्यपि न कर्तव्यमिति चेत्, न तत्, आत्मसंस्कारार्थो वाचनादिर्यत्नः । संस्कृतात्मा च त्रिष्वेव याचनादिषु व्याप्रियत इति । अथवा मुमुक्षोर्मुक्त्यर्थे यत्ने यदुपकारकं वचनं न तस्यास्ति निषेध इति ॥

सम्प्रति संयमोऽभिधीयते—

संयमस्य सप्तदशविधत्वम्

**भा०—योगनिग्रहः संयमः । स[3] सप्तदशविधः । तद्यथा—पृथिवीकायिकसंयमः, अप्कायिकसंयमः, तेजस्कायिकसंयमः, वायुकायिकसंयमः, वनस्पतिकायिकसंयमः, द्वीन्द्रियसंयमः, त्रीन्द्रियसंयमः, चतुरिन्द्रियसंयमः, पञ्चेन्द्रियसंयमः ॥**

टी०—योगनिग्रहः संयम इति । योगा–मनोवाक्कायलक्षणास्तेषां निग्रहः–प्रवचनोक्तविधिना नियमः एवमेव गन्तव्यमेवं स्थातव्यमेवं चिन्तयितव्यं एवं भाषितव्यमिति एष

---

1 'तार्थं तदन्यतममर्थं' इति ग-पाठः । २ अत्र पाठप्रपातो न वेति विचार्यताम् । ३ 'सप्त०' इति ग–पाठः ।

संयमोऽभिधीयते, स सप्तदशविध इति। स इत्थंरूपः संयमः सप्तदशप्रकारो भवति। तद्यथेत्यनेन तान् प्रकारानभिमुखीकरोति। पृथिवीकायिकसंयमः पृथिवी कायः—शरीरं येषां ते पृथिवीकायाः। एवं चेन्मत्वर्थीयाभावः? उच्यते—पृथिवीकायशब्दस्य जातिशब्दत्वाद् भवत्येव मत्वर्थीयः कृष्णसर्पवल्मीक इति यथा। अथवा ज्ञापकाद् भवन्ति "इङ्धार्योः शत्रकृच्छ्रिणि" ( पा० अ० ३, पा० २, सू० १३० ) इति। पृथिवीकायिकजातौ जातेर्वा संयमः—सम्यग् यमः—उपरमो निवृत्तिरित्यर्थः। ये जीवाः पृथिवीशरीराः तेषां संघट्ट-परितापव्यापत्तीर्मनो-वाक्-कायैः कृतकारितानुमतिभिश्च परिहरतीत्यर्थः। एवं सर्वत्र यावत् पञ्चेन्द्रियसंयमः।

पृथ्वीकायिकशब्दस्य सिद्धिः

भा०—प्रेक्ष्यसंयमः, उपेक्ष्यसंयमः, अपहृत्यसंयमः, प्रमृज्यसंयमः, कायसंयमः, वाक्संयमः, मनःसंयमः, उपकरणसंयम इति संयमो धर्मः ॥ ६ ॥

टी०—प्रेक्ष्येति। प्रेक्ष्यसंयम इत्यत्र क्रियापदाध्याहारः। प्रेक्ष्य क्रियामाचरन् संयमेन युज्यते। प्रेक्ष्येति चक्षुषा दृष्ट्वा स्थण्डिलं बीजजन्तुहरितादिरहितं पश्चादूर्ध्वनिषद्यात्वग्वर्तनस्थानानि विदधीतेत्येवमाचरतः संयमो भवति। उपेक्ष्यसंयम इति व्यापार्याऽव्यापार्य चेत्यर्थः। एवं च संयमो भवति, साधून् व्यापारयतः प्रवचनविहितासु क्रियासु संयम इति व्यापारणमेवोपेक्षणं गृहस्थान् स्वक्रियासु अव्यापारवत उपेक्षमाणस्य—औदासीन्यं भजतः संयमो भवति। अपहृत्यसंयम इति। प्रोज्झ्य—परिवर्ज्य संयमं लभते, वस्त्रपात्राद्यतिरिक्तमनुपकारकं चरणस्य वर्जयतः संयमलाभः, भक्तपानादि वा संसक्तं विधिना परित्यजत इति। प्रमृज्य संयम इति प्रेक्षिते स्थण्डिले रजोहृत्या प्रमार्जनमनुविधाय स्थानादि कार्यं पथि वा गच्छतः सचित्ताचित्तमिश्रपृथिवीकायरजोऽनुरञ्जितचरणस्य स्थण्डिलात् स्थण्डिलं सङ्क्रामतोऽस्थण्डिलाद् वा स्थण्डिलं प्रमृज्य चरणौ संयमभाक्त्वमगार्यादिरहितेऽन्यथा त्वप्रमार्जयत एवं संयमः। कायसंयम इति। धावन-वल्गन-प्लवनादिनिवृत्तिः, शुभक्रियासु च प्रवृत्तिः। वाक्संयमो हिंस्र-परुषादिनिवृत्तिः, शुभभाषायां च प्रवृत्तिः। मनःसंयमोऽभिद्रोहा-ऽभिमानेर्ष्यादिनिवृत्तिः, धर्मध्यानादिषु च प्रवृत्तिः। उपकरणसंयम इत्यजीवकायसंयमः। अजीवकायश्च पुस्तकादिः, तत्र यदा ग्रहणधारणशक्तिसम्पन्नाजोऽभूवन् पुरुषाः दीर्घायुषश्च तदा नासीत् प्रयोजनं पुस्तकैः, दुष्षमानुभावात् तु परिहीनैर्ग्रहणधारणादिभिरस्ति निर्युक्त्यादिपुस्तकग्रहणानुज्ञेत्येवं यथा कालमपेक्ष्यासंयमः संयमो वा भवतीत्येवं संयमो धर्मः ॥

पुस्तकग्रहणे हेतुः

१ 'यत्रोपरमः' इति ग–पाठः। २ 'निषद्यत्वेन' इति ङ–पाठः। ३ 'क्षणं ग्रहणं गृहस्था' इति ग–पाठः। ४ 'एव' इति ख–पाठः। ५ 'कायसंयमश्च' इति ग–पाठः।

सम्प्रति तपः प्रस्तावायातमुच्यते—

**भा०—तपो द्विविधम्। तत् परस्ताद् ( अ० ९, सू० १९-२० ) वक्ष्यते[1]। प्रकीर्णकं चेदमनेकविधम्।**

**टी०**—तपो द्विविधमित्यादि। तपतीति[2] तपः। कर्तर्यसुन् वा। संयमात्मनः शेषाशयविशोधनार्थं बाह्याभ्यन्तरतपनं[3] तपः। शरीरेन्द्रियतापनात् कर्मनिर्दहनाच्च तपः। **अपर** आह—" विशेषेण कायमनस्तापविशेषात् तपः "। द्विविधमिति बाह्यमाभ्यन्तरं वा (च)। बाह्यमिति बाह्यद्रव्यापेक्षत्वात् तीर्थिकगृहस्थादिकार्यत्वाच्च। आभ्यन्तरं त्वन्यतीर्थिकानभ्यस्तत्वादन्तःकरणव्यापारस्य प्राधान्याद् बाह्यद्रव्यानपेक्षत्वाच्च। अन्ये त्वाहुः—"परप्रत्यक्षं बाह्यम्। स्वप्रत्यक्षमाभ्यन्तरम्"। अथवा आतापनादिः कायक्लेशस्तपो बहिर्लक्ष्यत इति बाह्यम्। अनशनादिभ्यो[ वा तेभ्यो ]ऽपि च बहिस्तरां वर्तत इति तदुपलक्षितं बाह्यम्। नैवं प्रायश्चित्तादि। तत् परस्ताद्—उपरिष्टाद् वक्ष्यते—अनशनावमौदार्यादि प्रायश्चित्तविनयादि च यथाक्रमम्। इह त्वशून्यार्थं पुरुषविशेषचरितं प्रकीर्णकं कालाहारादिनियतमनेकविधं तद्यथेत्यादिना दर्शयति—

तपोलक्षणे मतान्तरम्

**भा०—तद्यथा—यववज्रमध्ये चन्द्रप्रतिमे द्वे। कनकरत्नमुक्तावल्यस्तिस्रः। सिंहविक्रीडिते द्वे ॥**

**टी०**—यववज्रमध्ये चन्द्रप्रतिमे द्वे इति। मध्यशब्दः प्रत्येकमभिसम्बध्यते–यवमध्या[4] वज्रमध्या[5] च। चन्द्रप्रतिमे इति चन्द्रतुल्ये। यथा चन्द्रस्य कलावृद्धिः प्रतिदिनमेवं भिक्षाकवलवृद्धिः। यथा चन्द्रस्य हानिः प्रतिदिनं तथा भिक्षाकवलहानिरिति। तत्र यवमध्या[6] चन्द्रप्रतिमा शुक्लप्रतिपदारम्भादमावास्यान्ता, प्रतिपद आरभ्य यथा चन्द्रस्य कलावृद्धिः ( तथा भिक्षाकवलवृद्धिः), कवलवृद्धिर्वा यावत् पौर्णमास्यां पञ्चदश कवलाः। ततः कृष्णप्रतिपद्यपि पञ्चदशैव। एवमेकैककवलहान्या यावदमावास्यायामेकः कवल इत्येषा यवमध्या।

वज्रमध्या कृष्णप्रतिपदारम्भा, कृष्णप्रतिपदि पञ्चदशकवलानभ्यवहरति। तत्राप्येकैककवलहानिर्यावदमावास्यायामेकः कवलः, शुक्लप्रतिपद्यप्येक एवेति। द्वितीयादिष्वेकैकवृद्धिर्यावत् पौर्णमास्यां पञ्चदशेत्येषा वज्रमध्या।

---

१ 'वक्ष्यति' इति ग-पाठः। २ 'तप्यतीति' इति ग-पाठः। ३ 'तापनं तपः' इति ङ-पाठः।
४-५ 'यवस्येव मध्ये स्थूलस्य पर्यन्तभागयोस्तु तनुकस्य मध्यं यस्याः सा यवमध्या, वज्रस्येव मध्ये तनुकस्य पर्यन्तयोस्तु स्थूलस्य मध्यं यस्याः सा वज्रमध्या' इति श्रीनेमिचन्द्रसूरिवरविरचितस्य प्रवचनसारोद्धारस्य श्रीसिद्धसेनसूरिकृतटीकायां ( ४४०तमे पत्राङ्के )।

६ यवमध्यां चन्द्रप्रतिमामुद्दिश्य प्रोक्तम्—

" एकैकां वर्धयेद् भिक्षां, शुक्ले कृष्णे च ह्रापयेत्।
भुञ्जीत नामावास्याया-मेष चान्द्रायणो विधिः ॥"

तथा कनकरत्नमुक्तावल्यास्तिस्र इति कनकावली-रत्नावली-मुक्तावली च। तत्र कनकावली तावदाख्यायते —प्राक् तावच्चतुर्थभक्तं ततः षष्ठं ततोऽष्टमं ततोऽपि षष्ठान्यष्टौ। पुनश्चतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडशाष्टादशविंशतिद्वाविंशतिचतुर्विंशतिषड्विंशत्यष्टाविंशतित्रिंशद्द्वात्रिंशच्चतुस्त्रिंशद्भक्तानि। ततः पुनश्चतुस्त्रिंशत्संख्यानि षष्ठानि। ततः परमेतदेवाद्यमर्धं चतुस्त्रिंशद्भक्तादारभ्य प्रतिलोमं विरचनीयं यावत् पर्यन्ते चतुर्थभक्तमिति।[1] अस्यां च तपोदिवसानां त्रीणि शतानि चतुरशीत्यधिकानि अष्टाशीतिः पारणदिवसाः, तत्प्रक्षेपाच्च चत्वारि दिनशतानि द्विसप्तत्यधिकानि भवन्ति। पिण्डस्तु वर्षमेकं त्रयो मासाः द्वाविंशतिर्दिवसा इति ॥

कनकावलीस्वरूपम्

अत्र च प्रथमकनकावल्यां सर्वकामगुणिकेन पारणाविधिः। द्वितीयकनकावल्यां पारणके सर्वनिर्विकृतिकं पारयितव्यम्। तृतीयस्यां पारणाविधिर्[2]लेपकृताहारेण। चतुर्थ्यां पारणाविधिराचाम्लेन परिमितभिक्षेणेति। एवमासां चतसृणामपि कालः पञ्च वर्षाणि मासद्वयमष्टाविंशतिर्दिवसा इति ॥

कनकावल्याः पारणाविधिः

---

१ प्रवचनसारोद्धारे तु प्रथमं रत्नावलीतपो व्याख्यातम्, तदनन्तरं कनकावलीतपः। उक्तं च तट्टीकायां (४३७तमे पत्राङ्के)—" कनकमयमणिकनिष्पन्नो भूषणविशेषः कनकावली, तदाकारं...यत् तपस्तत् कनकावलीत्युच्यते, एतच्च कनकावलीतपो रत्नावलीतपःक्रमेणैव क्रियते"

१ कनकावलीस्थापना यथा—

२ 'रसोपहारेण' इति ङ-पाठः।

सम्प्रति रत्नावल्याः[1] स्थापना[2]–चतुर्थषष्ठाष्टमानि। ततोऽष्टमान्यष्टौ[3]। पुनश्चतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडशाष्टादशविंशतिद्वाविंशतिचतुर्विंशतिषड्विंशत्यष्टाविंशतित्रिंशद्द्वात्रिंशच्चतुस्त्रिंशद्भक्तानि[4]। ततश्चतुस्त्रिंशत्सङ्ख्यान्यष्टमभक्तानि[5]। ततः परमाद्यमर्धं चतुस्त्रिंशद्भक्तादारभ्य प्रतिलोमं न्यसनीयं यावत् पर्यन्ते चतुर्थभक्तमिति[6]। अस्याश्चाष्टाशीतिः पारणादिवसाः, तैः सह तपोदिवसा एकस्थीकृता एष पिण्डितः कालो वर्षं पञ्च मासा द्वादश दिवसाः दिनशतानि पञ्च द्वाविंशत्युत्तराणि चतस्रो रत्नावलीभेदा इति। एष राशिः संवत्सरादिश्चतुर्गुणो जातं वर्षाणि पञ्च नव मासा अष्टादश दिवसाः। पारणाविधिः पूर्ववत्।

रत्नावलीस्वरूपम्

साम्प्रतं मुक्तावली[7] भण्यते प्राक् तावत् चतुर्थषष्ठे ततश्चतुर्थाष्टमे चतुर्थदशमे

---

१ "रत्नावली–आभरणविशेषः। रत्नावलीव रत्नावली, यथा हि रत्नावली उभयत आदि सूक्ष्मस्थूलस्थूलतरविभागकाहलिकाख्यसौवर्णावयवद्वययुक्ता, तदनु दाडिमपुष्पोभयोपशोभिता, ततोऽपि सरलसरिकायुगलशालिनी, पुनर्मध्यदेशे सुश्लिष्टपदकसमलङ्कृता च भवति, एवं यस्य तपः...तद् रत्नावलीत्युच्यते" इति प्रवचनसारोद्धारटीकायां (४३६तमे पत्राङ्के)।

२ रत्नावलीस्थापना—

३ "एतैः काहलिकाया अधस्तात् दाडिमपुष्पं निष्पद्यते" प्रवचन० (४३७तमे पत्राङ्के)। ४ "एषा हि दाडिमपुष्पस्याधस्तदेका सरिका"। ५ "एतैः किल पदकं सम्पद्यते"।

६ अन्तकृद्दशासु तु रत्नावल्यां पदके दाडिमद्वये च त्रिकस्थाने द्विका उक्ताः, कनकावल्यां च त्रिकाः।

७ मुक्तावली–मौक्तिकहारः, तदाकारस्थापनया यत् तपस्तन्मुक्तावल्युच्यते। एतत्स्थापना तु यथा—

| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | १ | ३ | १ | ४ | १ | ५ | १ | ६ | १ | ७ | १ | ८ | १ | ९ | १ | १० | १ | ११ | १ | १२ | १ | १३ | १ | १४ | १ | १५ | १ | १६ | |
| १ | २ | १ | ३ | १ | ४ | १ | ५ | १ | ६ | १ | ७ | १ | ८ | १ | ९ | १ | १० | १ | ११ | १ | १२ | १ | १३ | १ | १४ | १ | १५ | १ | १६ | |

चतुर्थद्वादशे चतुर्थचतुर्दशे चतुर्थषोडशे चतुर्थाष्टादशे चतुर्थविंशतितमे चतुर्थद्वाविंशे चतुर्थचतुर्विंशे चतुर्थषड्विंशे चतुर्थाष्टाविंशे चतुर्थत्रिंशद्भक्ते चतुर्थद्वात्रिंशद्भक्ते चतुर्थचतुस्त्रिंशद्भक्ते। अतः परमन्यदर्धं चतुस्त्रिंशद्भक्तादि प्रतिलोमं न्यसनीयं यावत् पर्यन्ते चतुर्थभक्तमिति। अत्र त्रीणि दिनशतानि षष्ट्यधिकानि वर्षमेकम्। एतच्चतुर्गुणं जातं वर्षचतुष्टयं, पारणादिनान्यपि क्षेप्याणि। पारणाविधिश्च पूर्ववत्।

मुक्तावलीस्वरूपम्

तथा अपरस्तपोविशेषः—सिंहविक्रीडिते द्वे–क्षुल्लकसिंहविक्रीडितं महासिंहविक्रीडितं च। तत्र क्षुल्लकसिंहविक्रीडितस्य रचना। चतुर्थषष्ठे चतुर्थाष्टमे षष्ठदशमे अष्टमद्वादशे दशमचतुर्दशे द्वादशषोडशे चतुर्दशाष्टादशे षोडशविंशे ततोऽष्टादश, पुनराद्यार्धमेव प्रतिलोमं रचनीयं विंशषोडशादिकं यावत् पर्यन्ते चतुर्थभक्तमिति, षड्भिर्मासैः सप्तभिश्च दिवसैः परिसमाप्तिः। एतच्चतुर्गुणं जातं वर्षद्वयं दिनान्यष्टाविंशतिः त्रयस्त्रिंशत् पारणादिवसा इति। महतः सिंहविक्रीडितस्य रचना। चतुर्थषष्ठे चतुर्थाष्टमे षष्ठदशमे अष्टमद्वादशे दशमचतुर्दशे द्वादशषोडशे चतुर्दशाष्टादशे षोडशविंशे अष्टादशद्वाविंशे विंशतिचतुर्विंशे द्वाविंशतिषड्विंशे चतुर्विंशाष्टाविंशे षड्विंशतित्रिंशद्भक्ते अष्टाविंशतिद्वात्रिंशद्भक्ते त्रिंशच्चतुस्त्रिंशद्भक्ते, ततो द्वात्रिंशद्भक्तं, ततः परमाद्यार्धमेव चतुस्त्रिंशद्भक्तकादिकं प्रतिलोमं विरचनीयं यावत् पर्यन्ते चतुर्थभक्तमिति। अस्य च कालो वर्षमेकं षट् मासा दिनान्यष्टादश। एष कालश्चतुर्गुणो जातं वर्षाणि षट् मासद्वयं दिनानि द्वादश, शेषं पूर्ववत्। तथा अपरं तपः–

क्षुल्लकसिंहविक्रीडितस्वरूपम्

महासिंहविक्रीडितस्वरूपम्

१ " महासिंहनिष्क्रीडितापेक्षया लघु ( क्षुल्लकं )–ह्रस्वं सिंहस्य निष्क्रीडितं–गमनं सिंहनिष्क्रीडितम्, तदिव यत् तपः तत् सिंहनिष्क्रीडितम्। सिंहो हि गच्छन् गत्वाऽतिक्रान्तं देशमवलोकयति एवं यत्र तपसि अतिक्रान्ततपोविशेषं पुनरासेव्य अग्रेतनं तं प्रकरोति तत् सिंहनिष्क्रीडितम्" इति प्रवचनसारोद्धारटीकायां ( ४३५तमे पत्राङ्के )।

२ स्थापना—

| १ | २ | १ | ३ | २ | ४ | ३ | ५ | ४ | ६ | ५ | ७ | ६ | ८ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| क्षुल्लकसिंहनिष्क्रीडितं तपः तपोदिनानि ३५४ पारणादिनानि ३३ | | | | | | | | | | | | | | | |
| १ | २ | १ | ३ | २ | ४ | ३ | ५ | ४ | ६ | ५ | ७ | ६ | ८ | ७ | ९ |

३ स्थापना—

| १ | २ | १ | ३ | २ | ४ | ३ | ५ | ४ | ६ | ५ | ७ | ६ | ८ | ७ | ९ | ८ | १० | ९ | ११ | १० | १२ | ११ | १३ | १२ | १४ | १३ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| महासिंहनिष्क्रीडितं तपः तपोदिनानि ४९७ पारणादिनानि ६१ | | | | | | | | | | | | | | | | | | | | | | | | | | |
| १ | २ | १ | ३ | २ | ४ | ३ | ५ | ४ | ६ | ५ | ७ | ६ | ८ | ७ | ९ | ८ | १० | ९ | ११ | १० | १२ | ११ | १३ | १२ | १४ | १३ |

भा०—सप्तसप्तमिकाद्याः प्रतिमाश्चतस्रः भद्रोत्तरमाचाम्लवर्धमानं सर्वतोभद्रमित्येवमादि ॥

टी०—सप्तसप्तमिका अष्टाष्टमिका नवनवमिका दशदशमिका चेति । तत्र सप्तसप्तमिका प्रथमायामहोरात्राणामेकोनपञ्चाशद् दिवसा इत्यर्थः । अष्टाष्टकाः । अष्टाष्टमिकायामहोरात्राणां चतुःषष्टिर्दिनानीति । तथा नवनवमिकायामेकाशीतिरहोरात्राणि । दशदशमिकायां दिवसशतम् । सर्वत्र प्रथमा अहोरात्रसङ्ख्यासु एकैकभिक्षाशित्वम् । सर्वत्रेति चतसृष्वपि प्रतिमासु प्रथमे सप्तमके प्रथमेऽष्टके प्रथमे नवके प्रथमे च दशके प्रतिदिनमेकैकभिक्षाशित्वं द्वितीये सप्तकेऽष्टके नवके दशके च भिक्षाद्वयाशित्वम्, एवं शेषेष्वपि सप्तकादिष्वेकैकभिक्षावृद्धिः कार्या यावत् सप्तमे सप्तके सप्तभिक्षा अष्टमेऽष्टौ भिक्षा नवमे नव भिक्षा दशमे दशभिक्षाशित्वमिति ॥

तथाऽन्यत् तपः सर्वतोभद्रमिति द्विविधं तत्—क्षुल्लकसर्वतोभद्रं महासर्वतोभद्रं चेति । तत्र प्रथमस्य प्रस्तारविधिर्भण्यते—पञ्च गृहाणि कृत्वा तिर्यगूर्ध्वं च । ततो रचना तपसः कार्या । चतुर्थषष्ठाष्टमदशमद्वादशानि प्रथमपङ्क्तौ, द्वितीयस्यां च दशमद्वादशचतुर्थषष्ठाष्टमानि, तृतीयायां षष्ठाष्टमदशमद्वादशचतुर्थानि, द्वादशचतुर्थषष्ठाष्टमदशमानि चतुर्थ्यां, पञ्चम्यामष्टमदशमद्वादशचतुर्थषष्ठानि । पारणादिवसाः पञ्चविंशतिः । कालो मासत्रयं दिनानि दश । एष एव चतुर्गुणो वर्षमेकं मासो दश दिनानीति ॥

---

१ 'सर्वतोभद्रं भद्रोत्तर०' इति ग-पाठः ।

२ सप्तसप्तमिकायाः स्वरूपं अन्तकृद्दशासु यथा—

"पढमे सत्तए एक्केक्कं भोयणस्स दत्तिं पडिगाहेइ, एक्केक्कं पाणयस्स, एवं जाव सत्तमे सत्त दत्तीउ भोयणस्स, सत्त पाणयस्स..."

[ प्रथमे सप्तके एकैकां भोजनस्य दत्तिं प्रतिगृह्णाति, एकैकां पानकस्य, एवं यावत् सप्तमे सप्त दत्तयो भोजनस्य, सप्त पानकस्य....]

व्यवहारभाष्ये त्वेवम्—

"अहवा एक्केक्कियं दत्तिं, जा सत्तेक्केक्कस्स सत्तए ।
आएसो अत्थि एसो वि............॥"

[ अथवा एकैकां दत्तिं यावत् सप्त एकैकस्मिन् सप्तके ।
आदेशोऽस्ति एषोऽपि............]

३ 'दशमिकाया' इति च-पाठः ।

४ क्षुल्लकसर्वतोभद्रस्य प्रथमो विकल्पः

| | | | | |
|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ |
| ४ | ५ | १ | २ | ३ |
| २ | ३ | ४ | ५ | १ |
| ५ | १ | २ | ३ | ४ |
| ३ | ४ | ५ | १ | २ |

क्षुल्लकसर्वतोभद्रमुच्यते—तिर्यगूर्ध्वं कर्णयोश्च सर्वत्र दिनराशिस्तुल्यः पञ्चदशपरिमाण इति । अथवा क्षुल्लकऽस्य सर्वतोभद्रस्य [1]द्वितीयो विकल्पः । चतुर्थषष्ठाष्टमदशमद्वादशानि, अष्टमदशमद्वादशचतुर्थषष्ठानि, द्वादशचतुर्थषष्ठाष्टमदशमानि, षष्ठाष्टमदशमद्वादशचतुर्थानि, दशमद्वादशचतुर्थषष्ठाष्टमानीति ॥

सम्प्रति महत्सर्वतोभद्रं भण्यते—सप्त गृहकाणि कृत्वा तिर्यगूर्ध्वं च तपोरचना । चतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडशभक्तानि, चतुर्दशषोडशचतुर्थषष्ठाष्टमदशमद्वादशभक्तानि, दशमद्वादशचतुर्दशषोडशचतुर्थषष्ठाष्टमानि, षष्ठाष्टमदशमद्वादशचतुर्दशषोडशचतुर्थानि, षोडशचतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशानि, द्वादशचतुर्दशषोडशचतुर्थषष्ठाष्टमदशमानि, अष्टमदशमद्वादशचतुर्दशषोडशचतुर्थषष्ठानि ॥[2]

---

१ क्षुल्लकसर्वतोभद्रस्य द्वितीयो विकल्पः, अयं तु प्रवचनसारोद्धारे निर्दिष्टस्य भद्रतपसः स्वरूपवाची ।

| १ | २ | ३ | ४ | ५ |
|---|---|---|---|---|
| ३ | ४ | ५ | १ | २ |
| ५ | १ | २ | ३ | ४ |
| २ | ३ | ४ | ५ | १ |
| ४ | ५ | १ | २ | ३ |

२ महासर्वतोभद्रम्

| १ | २ | ३ | ४ | ५ | ६ | ७ |
|---|---|---|---|---|---|---|
| ६ | ७ | १ | २ | ३ | ४ | ५ |
| ४ | ५ | ६ | ७ | १ | २ | ३ |
| २ | ३ | ४ | ५ | ६ | ७ | १ |
| ७ | १ | २ | ३ | ४ | ५ | ६ |
| ५ | ६ | ७ | १ | २ | ३ | ४ |
| ३ | ४ | ५ | ६ | ७ | १ | २ |

३ प्रवचनसारोद्धारे सर्वतोभद्रं यथा—

| ५ | ६ | ७ | ८ | ९ | १० | ११ |
|---|---|---|---|---|---|---|
| ८ | ९ | १० | ११ | ५ | ६ | ७ |
| ११ | ५ | ६ | ७ | ८ | ९ | १० |
| ७ | ८ | ९ | १० | ११ | ५ | ६ |
| १० | ११ | ५ | ६ | ७ | ८ | ९ |
| ६ | ७ | ८ | ९ | १० | ११ | ५ |
| ९ | १० | ११ | ५ | ६ | ७ | ८ |

प्रवचनसारोद्धारे महाभद्रमपि दृश्यते तद्रचना यथा—

| १ | २ | ३ | ४ | ५ | ६ | ७ |
|---|---|---|---|---|---|---|
| ४ | ५ | ६ | ७ | १ | २ | ३ |
| ७ | १ | २ | ३ | ४ | ५ | ६ |
| ३ | ४ | ५ | ६ | ७ | १ | २ |
| ६ | ७ | १ | २ | ३ | ४ | ५ |
| २ | ३ | ४ | ५ | ६ | ७ | १ |
| ५ | ६ | ७ | १ | २ | ३ | ४ |

भद्रोत्तररचना। द्वादशचतुर्दशषोडशाष्टादशविंशतिभक्तानि, अष्टादशविंशतिद्वादश-चतुर्दशषोडशभक्तानि, चतुर्दशषोडशाष्टादशविंशति द्वादशभक्तानि, विंशतिद्वादशचतुर्दश-षोडशाष्टादशभक्तानि, षोडशाष्टादशविंशतिद्वादशचतुर्दशभक्तानि दिनानि पञ्चत्रिंशद्भद्रो-त्तरतपसि।

तथाऽपरं तपः आचाम्लवर्धमानम्। अलवणारनालौदनलक्षणमाचाम्लं तद् वर्धमानं यत्र तपसि तदाचाम्लवर्धमानं तस्य प्ररूपणा-प्राक् तावदाचाम्लं ततश्चतुर्थभक्तं पुनर्द्वे आचाम्ले पुनश्चतुर्थभक्तं पुनस्त्रीण्याचाम्लानि पुनश्चतुर्थभक्तं चत्वार्याचाम्लानि पुनश्चतुर्थभक्तं पञ्चा-चाम्लानि पुनश्चतुर्थभक्तं एवमेकैकमाचाम्लं वर्धयता चतुर्थभक्तं च विदधता तावद् वर्धयि-तव्यमाचाम्लं यावदाचाम्लशतं पूर्णं पर्यन्ते च चतुर्थभक्तं कालपरिमाणमस्य चतुर्दश वर्षाणि मासत्रयं विंशतिर्दिवसाश्चेति। सर्वतोभद्रमित्येवमादीत्यादिग्रहणादनेकप्रकारं तपोऽस्ति प्रकीर्णकमिति ज्ञापयतीति पारमर्ष एव प्रसिद्धं प्रवचने॥

अथवाऽऽदिशब्दसङ्गृहीता द्वादश भिक्षुप्रतिमास्तद्दर्शनार्थमाह—

**भा०—तथा द्वादश भिक्षुप्रतिमाः—मासिक्याद्याः आ सप्तमासिक्यः सप्त, सप्तचतुर्दशैकविंशतिरात्रिक्यस्तिस्रः, अहोरात्रिकी, एकरात्रिकी चेति॥ ७॥**

**टी०—तथा द्वादश भिक्षुप्रतिमा मासिक्याद्या** इति। मासिकी आदिर्यासां ता **मासिक्याद्याः**। **द्वादशेति** इयत्तानिरूपणाय संख्या। भिक्षुरुद्गमोत्पादनैषणादिशुद्ध-भिक्षाशी। प्रतिमा प्रतिज्ञा। मासः प्रयोजनमस्या इति मासिकी। मासेन परिसमाप्तिमायाती-त्यर्थः। **आ सप्तमासिक्याः सप्तेति** विभागं दर्शयति, द्वित्रिचतुःपञ्चषट्सप्तमासाख्याः। एवमेताः सप्त तथाऽपरास्तिस्रः प्रथमा सप्तरात्रिकी द्वितीया सप्तरात्रिकी तृतीया सप्तरात्रिकी चेति। एवमेता दश। अपरे द्वे **अहोरात्रिकी एकरात्रिकी चेति**। एवं द्वादश। तत्र मासिकीं प्रतिमामारूढः साधुर्भोजनस्यैकां दत्तिमात्ते।

१ भद्रोत्तरम्

| | | | | |
|---|---|---|---|---|
| ५ | ६ | ७ | ८ | ९ |
| ८ | ९ | ५ | ६ | ७ |
| ६ | ७ | ८ | ९ | ५ |
| ९ | ५ | ६ | ७ | ८ |
| ७ | ८ | ९ | ५ | ६ |

प्रवचनसारोद्धारे तु भद्रोत्तरं यथा—

| | | | | |
|---|---|---|---|---|
| ५ | ६ | ७ | ८ | ९ |
| ७ | ८ | ९ | ५ | ६ |
| ९ | ५ | ६ | ७ | ८ |
| ६ | ७ | ८ | ९ | ५ |
| ८ | ९ | ५ | ६ | ७ |

२ 'तदेव' इति ङ-पाठः। ३ 'सप्तरात्रिक्याः तिस्रः' इति घ-पाठः। ४ 'रात्रिकी रात्रिकी' इति घ-पाठः। ५ 'दत्तिकामा(?)' इति ङ-पाठः।

एकमासिक्याः स्वरूपम्

तथा पानकस्य, दायिका च एलुकस्यान्तः पादमेकं विन्यस्यापरं बहिर्व्यवस्थाप्य तां दत्तिं यदि ददाति ततः कल्पते । तथा आदिमध्यावसानगोचरत्रयहींडी पेडा अर्धपेडा गोमूत्रिका पतङ्गवीथिः संबुकवृत्ता गत्वा प्रत्यागता चेति षड्विधगोचरभूमिचारी । एवंविधतपश्चारीति यत्र ज्ञायते तत्रैकरात्रं कल्पते वासः । यत्र न ज्ञायते तत्रैकरात्रं वाऽहोरात्रद्वयं वा वस्तु कल्पते, न परतः । याचनप्रच्छनाऽनुज्ञापनप्रश्नव्याकरणभाषी आगमनविकटगृहकवृक्षमूलोपाश्रयत्रयपरिभोगकारी पृथिवीकाष्ठयथास्तीर्णसंस्तारकत्रयशायी कश्चित् तदध्यासिते प्रतिश्रये अग्निं लगयेत् ततो दाहभयान्न निष्क्रामेत्[1] कण्टकादिकं पादलग्नमक्षितो वा कणुकादि[2] नो निर्हरेत् । जलस्थलादिषु यत्रास्तमेति तपनस्ततः स्थानादेकमपि पदं न प्रयाति । विगतजीवेनापि पानकेन हस्तपादादिप्रक्षालनं न करोति । सन्मुखमापततो दुष्टाश्वहस्त्यादेर्भीत्या पदमप्येकं पश्चान्नापसर्पेत् । एवमादिभिर्नियमविशेषैर्विचित्रा एषा मासिकी प्रतिमेति । द्विमासप्रतिमामारूढस्यान्धसो द्वे दत्ती पानकस्य च, शेषचर्या पूर्ववत् । एवमुत्तरास्वपि यावन्तो मासास्तावत्य एव दत्तयोऽपि यावत् सप्तमासिक्यां सप्त दत्तयः । शेषं प्रथमप्रतिमावद्विधानम् । प्रथमसप्तरात्रिकीं प्रतिमामारूढस्य चतुर्थभक्तमपानकं ग्रामादेर्बहिरुत्तानपार्श्वशायिनो निषण्णस्य वा कल्पते स्थातुं

सप्तरात्रिक्याः स्वरूपम्

दिव्यमानुषतैर्यग्योनानुपसर्गान् सम्यक्सहमानस्येत्यन्यत् पूर्ववत् । द्वितीयां सप्तरात्रिकीं प्रतिमामारूढस्य तदेव चतुर्थभक्तमपानकं च स्थानं त्वस्य दण्डायतं[3] लगडशायिता उत्कुटुकासनं[4] वा । तृतीयामपि सप्तरात्रिकीं प्रतिमामारूढस्य चतुर्थभक्तमपानकं च, स्थानं पुनरस्य गोदोहिका[5] वीरासनं आम्रकुब्जिता चेति । अहोरात्रिकीं प्रतिपन्नस्य प्रतिमां षष्ठभक्तमपानकं बहिर्ग्रामादेश्चतुरङ्गुलान्तरौ चरणौ विधाय लम्बितबाहोः कायोत्सर्गावस्थानमेकं, शेषं पूर्ववत् । एकरात्रिकीं प्रतिमां कुर्वतोऽष्टमभक्तमपानकं ग्रामादेर्बहिरीषत् प्राग्भारगतेन कायेनैकपुद्गलनिरुद्धदृष्टिरनिमिषनयनो[6] यथाप्रणिहितगात्रः सुगुप्तेन्द्रियग्रामः कायोत्सर्गावस्थायी दिव्यमानुषतैरश्चानुपसर्गान् सम्यक् तितिक्षते यस्तस्य भवतीति सप्तचतुर्दशैकविंशतिरात्रिक्यस्तिस्र इति । नेदं पारमर्षप्रवचनानुसारि[7] भाष्यं, किं तर्हि ?

भाष्यपाठपरामर्शः

प्रमत्तगीतमेतत् । वाचको हि पूर्ववित् कथमेवंविधमार्षविसंवादि निबध्नीयात्[8] ? सूत्रानवबोधादुपजातभ्रान्तिना केनापि रचितमेतद् वचनकम्—

दोच्चा सत्तराइंदिया तइया सत्तराइंदिया । द्वितीया सप्तरात्रिकी तृतीया सप्तरात्रिकीति सूत्रनिर्भेदः । द्वे सप्तरात्रे त्रीणीति सप्तरात्राणीति । सूत्रनिर्भेदं कृत्वा पठितमज्ञेन सप्तचतुर्दशैकविंशतिरात्रिक्यस्तिस्र[9] इति ॥

---

१ 'नातिक्रामेत्' इति ग-पाठः । २ 'कादिना' इति ङ-पाठः । ३ 'दण्डयतः' इति ङ-पाठः । ४ 'उत्कुटुकस्थानं' इति ङ-पाठः । ५ 'हिकापुनर्वीरा' इति ङ-पाठः । ६ 'निरूढदृष्टि' इति च-पाठः । ७ 'मर्षवचना' इति ङ-पाठः । ८ 'ब्रूयात्' इति ङ-पाठः । ९ 'द्विसप्त' इति ग-पाठः ।

एवं तपः प्रकीर्णकमभिधाय त्यागाभिधित्सया प्राह—

**भा०—बाह्याभ्यन्तरोपधिशरीरान्नपानाद्याश्रयो भावदोषपरित्यागस्त्यागः।**

**टी०—बाह्याभ्यन्तरोपधिशरीरान्नपानादिराश्रयो यस्य तस्यैवंविधस्य भाव-दोषस्य परित्यागस्त्यागो**ऽभिधीयते। न हि निरालम्बनो भावदोषः समस्ति। यथा ह्यशुभं तपसा नादत्ते प्राक्तनं च त्यजत्येवं बाह्योपकरणादित्यागोऽपि संवृणोत्यास्रवद्वाराणि। तत्रोपकरणं बाह्यं रजोहरणपात्रादि स्थविरजिनकल्पयोग्योपधिः दुष्टवाङ्मनसः[2] अभ्यन्तरं क्रोधादिश्चातिदुस्त्यज उपधिः। शरीरं वाऽभ्यन्तरमन्नपानं च बाह्यम्। आदिग्रहणादौपग्रहिकं च बहिर्निषद्यादण्डकादि आश्रयभूतं भावदोषस्य भवति। भावदोषो मूर्च्छा स्नेहः गार्ध्यादिः। संयमसाधनं रजोहरणादीत्येवं धारयति, न पुना रागादियुक्तः शोभाद्यर्थम्। एवंविधस्य भावदोषस्य परित्यागः सर्वप्रकारस्त्याग उच्यते॥

सम्प्रति आकिञ्चन्यस्वरूपनिरूपणायाह—

**भा०—शरीरधर्मोपकरणादिषु निर्ममत्वमाकिञ्चन्यम्॥ ९॥**

**टी०—शरीरेति।** उक्तेन न्यायेन भावदोषत्यागं कृत्वा बाह्योपकरणं रजोहरणपात्राद्युपभुञ्जानोऽप्यकिञ्चन एव भवति। शरीरमाश्रयमात्रमात्मनो यदा च तत्र त्यागार्हमशुचि-त्वङ्मांसास्थिपञ्जरं केवलं धर्मसाधनचेष्टायाः संयमभरक्षमायाः साहायके वर्तते। तदिदं शकटाक्षोपाञ्जनवदाहारादिनोपग्राह्यम्। न त्ववयवसन्निवेशशोभार्थमिति[3]। **निर्ममत्वमाकि-ञ्चन्यं** धर्मोपकरणं रजोहृत्यादि[4] प्रमार्जनादिकार्यप्रसाधनाय व्याप्रियत इति संयमोपकरणम्। अत्रापि निर्ममत्वमाकिञ्चन्यमिति॥

ब्रह्मचर्यस्वरूपनिर्दिधारयिषया प्राह—

**भा०—व्रतपरिपालनाय ज्ञानाभिवृद्धये कषायपरिपाकाय च गुरुकुलवासो ब्रह्मचर्यम्॥**

**टी०—व्रतपरिपालनायेत्यादि।** आकिञ्चन्ये व्यवस्थितो ब्रह्मचर्यं परिपालयेत्। तच्च ब्रह्मचर्यं गुरुकुलवासलक्षणम्। गुरुकुलवासो ब्रह्मचर्यमिति। बृहत्त्वादात्मा ब्रह्म [आवृत्तिरात्मनि ब्रह्मचर्यमाख्यातम्] ब्रह्मणि चरणमात्मारामत्वमरक्तद्विष्टात्मनि व्यवस्थानम्। अब्रह्मणश्च विनिवृत्तिर्व्रतं मैथुनवर्जप्राधान्येन। तत्परिपालनाय[5] गुरुकुले वस्तव्यम्। यद्यपि मनोज्ञामनोज्ञ-

१ 'त्यागधर्मः' इति ग-पाठः। २ 'मनसमभ्यन्तरं' इति ग-पाठः। ३ 'शोभार्थी प्रति' इति च-पाठः। ४ 'रजोगुत्यादि' इति ङ-पाठः। ५ 'तस्य प्रतिपा०' इति ग-पाठः।

विषयरागविरागविमुक्तिर्ब्रह्मचर्यं, तथापि प्रधानत्वेन विवक्षा मैथुनसेवाविरतेरेव। तत्परिपालनार्थं च भगवद्भिर्नवगुप्तय उपदिष्टाः—वसति-कथा-निषद्ये-न्द्रिय-कुड्यान्तर-पूर्वक्रीडितप्रणीताहारा-ऽतिमात्र-भोजनविभूषणाख्याः। ज्ञानसंवर्धनार्थं च गुरुकुलवासः। यथोक्तमार्षे—

"[1]नाणस्स होइ भागी थिरयरओ दंसणे चरित्ते य।
धन्ना आवकहाए गुरुकुलवासं न मुंचंति ॥ १ ॥"

कषायाः क्रोधादयस्तेषां परिपाकः—परिणतिरुपशमः क्षयो वा तदर्थं च गुरुकुल-वासोऽभ्युपेयः। गुरुरहितस्य हि परिणामवैचित्र्याद् विकथादिदोषात् असज्जनसम्पर्कात् असत्क्रियासङ्गात् अनुस्रोतोगामित्वदोषात् सद्य एव मोक्षमार्गाद् भ्रंशः स्यात्। तस्मादाप्राणितात् गुरुकुलवासः श्रेयः। गुरुकुलवासेन वा स्वतन्त्रीकृतस्य ज्ञानदर्शनचरणव्रतभावनागुप्त्यादिपरिवृद्धिः। अत एव च साधोर्द्विसङ्गृहीतत्वमाचार्योपाध्यायाभ्याम्। निर्ग्रन्थ्यास्तु प्रवर्तिनी सङ्गृहीतत्वं च। तदेव च पर्यायशब्दैराख्यातमादराधानार्थम् ॥

आचार्याणां पञ्चविधत्वम्

भा०—अस्वातन्त्र्यं गुर्वधीनत्वं गुरुनिर्देश( शाव ? )स्थायित्व-मित्यर्थं च पञ्चाचार्याः प्रोक्ताः—प्रव्राजकः, दिगाचार्यः, श्रुतोद्देष्टा, श्रुतसमुद्देष्टा, आम्नायार्थवाचक इति ॥

टी०—अस्वातन्त्र्यं गुर्वधीनत्वं गुरुनिर्देशावस्थायित्वमिति। आचार्यग्रहणाच्च पञ्चाचार्याः प्रोक्ताः—ख्याप्याः प्रव्राजकः—सामायिकव्रतादेरारोपयिता १, दिगाचार्यः—सचित्ताचित्तमिश्रवस्त्वनुज्ञायी २, श्रुतोद्देष्टा—श्रुतम्—आगममुद्दिशति यः प्रथमतः ३, एवमुद्दिष्टगुर्वादेरपाये तदेव श्रुतं समुद्दिशत्यनुजानीते वा यः स्थिरपरिचितकारयितृत्वेन सम्यग् धारणानुप्रवचनेन च स श्रुतसमुद्देष्टा।, समुद्देष्टानुज्ञयोरेककालत्वात् समुद्देशसङ्गृहीतमनुज्ञानम् ४, आम्नाय—आगमस्तस्योत्सर्गापवादलक्षणोऽर्थस्तं वक्तीत्याम्नायार्थवाचकः, पारमर्षप्रवचनार्थकथनेनानुग्राहकोऽक्षनिषद्यानुज्ञायी पञ्चम आचार्यः ५ ॥

भा०—तस्य ब्रह्मचर्यस्येमे विशेषगुणा भवन्ति। अब्रह्मविरतेर्व्रतस्य भावना यथोक्ता इष्टस्पर्श-रस-गन्ध-विभूषानभिनन्दित्वं चेति ॥

टी०—तस्य ब्रह्मचर्यस्येत्यादि। पुनरपि तद्रक्षणदृढीकरणार्थं ब्रह्मचर्यस्य विशेषगुणाः ख्याप्यन्ते—इमे इति प्रत्यक्षीक्रियन्ते। विशेषेण—अतिशयेनोपकारित्वाद् विशेषगुणा अब्रह्मविरतेर्ब्रह्मव्रतस्य। यथोक्ता भावनाः प्राक् पञ्च दोषवर्जनेन निगूढंख्यक्षा-

---

१ छाया—

ज्ञानस्य भवति भागी स्थिरतरतो दर्शने चरित्रे च।
धन्या यावत्कथं गुरुकुलवासं न मुञ्चन्ति ॥

२ 'गुर्वाद्यपाये' इति ङ-पाठः। ३ 'रतिव्रतभावना' इति घ-पाठः। ४ 'रस-रूप-गन्ध-शब्द-विभूषा०' इति घ-पाठः।

लोचनपूर्वरतस्मृतिवृष्यरसकामकथनेभ्यः संसक्तादावेमथाच्च विरतयो भावना ब्रह्मणः, इष्टाश्च शुभा ये स्पर्शादयः, शरीरविभूषा च, तत्रानभिनन्दत्वं-तत्प्राप्तावप्यपरितुष्टिर्मनसोऽप्रसादः-अरक्तद्विष्टतेत्येवं ब्रह्मचर्यं जायते इति। तदेवं क्षमया क्रोधं निहन्यात्, निहतक्रोधो नीचैर्वृत्त्यनुत्सेकाभ्यां मार्दवं धारयेत्, परित्यक्तमदस्थान आर्जवं भावयेत्, भावदोषवर्जनेन निगूढदोषां मायामार्जवेन प्रकटीकृत्य शौचमाचरेत् अलोभसंश्रयेण, लोभाशौचं अलोभशौचेन संशोध्य शुद्धात्मा सत्यं ब्रूयात्, सत्यभाषी सप्तदशविधं संयममनुतिष्ठेत्, संयतात्मा शेषाशयविशोधनार्थं तपश्चरेत्, ततो बाह्यान्यपि धर्मसाधनानि त्यजेत्, विद्यमानेष्वपि कायवाङ्मानसेषु धर्मोपकरणेषु स्वजनसुहृत्सन्निधिषु च निःस्पृहत्वान्निर्ममत्वाख्यमाकिञ्चन्यं भावयेत्। सत्याकिञ्चन्ये ब्रह्मचर्यं परिपूर्णं भवतीति ॥ ६ ॥

ब्रह्मचर्यस्य परिपूर्णतायां साधनानि

एवं परमविशुद्धिलक्षणे धर्मे व्यवस्थितः पुनरपि आत्मगुणदोषजुगुप्सार्थं जगद् द्वादशभिः स्वतत्त्वैर्विभज्यानुचिन्तयेदित्याह—

द्वादश भावनाः

**सूत्रम्—अनित्या-ऽशरण-संसारै-कत्वा-ऽन्यत्वा-ऽशुचित्वा-ऽऽस्रव-संवर-निर्जरा-लोक-बोधिदुर्लभ-धर्मस्वाख्याततत्त्वानुचिन्तनमनुप्रेक्षाः ॥ ९–७ ॥**

टी०—अपरे पठन्ति–अनुप्रेक्षा इति अनुप्रेक्षितव्या इत्यर्थः। अपरेऽनुप्रेक्षाशब्दमेकवचनान्तमधीयते, तत्रार्थोऽनित्यादिचिन्तनमनुप्रेक्षोच्यते, बहुवचनान्ते त्वनित्यादिचिन्तनान्यनुप्रेक्षा इति।

**भा०—एता द्वादशानुप्रेक्षाः। तत्र बाह्याभ्यन्तराणि शरीर-शय्या-ऽऽसन-वस्त्रादीनि द्रव्याणि सर्वसंयोगाश्चानित्या इत्यनुचिन्तयेत्। एवं ह्यस्य चिन्तयतस्तेष्वभिष्वङ्गो न भवति। मा भून्मे तद्वियोगजं दुःखमित्यनित्यानुप्रेक्षा ॥ १ ॥**

टी०—एता द्वादशानुप्रेक्षा इत्यादि। एता अनित्यादिकाः परामृश्यन्ते। द्वादशेति द्वादशैव, नाधिका न्यूना वा। अनुप्रेक्षणमनुप्रेक्षा। अनुप्रेक्ष्यन्ते अनुचिन्त्यन्त इति वाऽनुप्रेक्षाः। तत्र-तास्वनित्यभावना तावद् भण्यते। तत्रानित्यादयो धर्मस्वाख्यातान्ताः कृतद्वन्द्वाः विहितभावप्रत्यया अनुचिन्तनशब्देन सह कृतषष्ठीसमासास्तत्पुरुषसमानाधिकरणानुप्रेक्षाशब्देन सह सम्प्रतिपद्यन्ते। अभ्यन्तरं शरीरद्रव्यं जीवप्रदेशैर्व्याप्तत्वात् बाह्यानि शय्या-ऽऽसन-वस्त्रादीनि। आदिग्रहणादौघिकौपग्रहिकोपधेः समस्तस्य ग्रहणम्। तत्र शरीरं तावत् जन्मनः प्रभृति पूर्वावस्थां जहदुत्तरावस्थामास्कन्दत् प्रतिक्षणमन्यथाऽन्यथा च भवज्जराजर्जरितसकलावयवं पुद्गलजालविरचनामात्रं

अनित्यभावनायाः स्वरूपम्

१ 'वसत्वाच्च' इति ङ-च-पाठः। २ 'प्रकृत्य' इति ङ-पाठः। ३ 'ततत्त्वानु०' इति घ-पाठः।

इत्युपाध्यायः पृषोदरादित्वात्। सङ्ग्रहादीन् वाऽस्योपाध्येतीति संग्रहोपग्रहानुग्रहान्-वाऽस्य सम्बन्धिनस्तत्समीपभवांस्तत्कृतानुपाध्येति स्मरतीति उपाध्यायः द्विसङ्ग्रहो निर्ग्रन्थ इति। सङ्गृह्यतेऽनेनेति सङ्ग्रहः। द्वाभ्यां सङ्गृह्यते इत्यर्थः॥

का पुनरियं प्रवर्तनीत्याह—

**भा०—प्रवर्तनी दिगाचार्येण व्याख्याता। हिताय प्रवर्तते प्रवर्तयति चेति प्रवर्तनी॥**

टी०—**प्रवर्तनी दिगाचार्येण व्याख्यातेति**। दिगाचार्यो दिशामनुजानाति। सचित्ताचित्तमिश्रप्रदायीत्यर्थः। तेन व्याख्याता तत्सदृशी द्रष्टव्या श्रुतसकलनिशीथाध्ययना-समुचितकल्पव्यवहारस्तत्र ग्राहिणी संविग्ना प्राप्तदिगनुज्ञा चात्महिताय प्रवर्तते निःश्रेयसायैव घटते। अन्याश्च **प्रवर्तयति** साध्वीः स्मारणावधारणवारणादिप्रयोगेणेति **प्रवर्तनी**॥

**भा०—विकृष्टोग्रतपोयुक्तस्तपस्वी। अचिरप्रव्रजितः शिक्षयितव्यः शिक्षः, शिक्षामर्हतीति शैक्षो वा। ग्लानः प्रतीतः। गणः स्थविरसन्ततिसंस्थितिः। कुलं एकाचार्यसन्ततिसंस्थितिः। सङ्घश्चतुर्विधः श्रमणादिः। साधवः-संयताः। सम्भोगयुक्ताः समनोज्ञाः॥**

टी०—विकृष्टेत्यादि। विकृष्टं-दशमादि किञ्चिन्न्यूनषण्मासान्तं **उग्रं**-भावविशुद्ध-मनिश्रितमल्पसत्त्वस्य वा भयानकमुग्रं तपस्तेन **युक्तस्तपस्वीति**। **अचिरप्रव्रजित** इत्यादि। आद्यपश्चिमतीर्थयोर्मध्यमतीर्थेषु च कतिचिदहानि प्रतिपन्नस्य सामायिकस्य गतानि यस्य सोऽचिरप्रव्रजितः[1]। अनारोपितविविक्तव्रतो वा ग्रहणासेवनशिक्षामुभयीं शिक्षयितव्यः शिक्षः। **शिक्षामर्हतीति**। वा शिक्षाशीलो वा **शैक्षः**। छत्रादित्वाण्णप्रत्ययः। **ग्लानो** मन्दोऽपटुर्व्याध्यभिभूतः। **प्रतीतः**-सुज्ञात एवेत्यर्थः। कुलानि स्थानीयादीनि। कुलं-समुदायः। **गणः-स्थविरसन्ततिसंस्थितिः**। स्थविरग्रहणेन श्रुतस्थविरपरिग्रहः, न वयसा पर्यायेण वा, तेषां सन्ततिः-परम्परा तस्याः संस्थानं-वर्तनं अद्यापि भवनं **संस्थितिः कुलमाचार्य-सन्ततिसंस्थितिः** एकाचार्यप्रणेयसाधुसमूहो गच्छः। बहूनां गच्छानां एकजातीयानां समूहः **कुलम्**। तत्र ये आचार्य[2]गुणोपेतास्तत्सन्तति-संस्थितिः कुलं तेषां प्राधान्यम्।

गच्छ-कुलयोरर्थः

**सङ्घश्चतुर्विधः**—साधु-साध्वी-श्रावक-श्राविकाः। तत्र ये व्यवस्थिताः ज्ञान-दर्शन-चरणगुणास्ते परमार्थतः सङ्घः **श्रमणादिरिति**। 'पुरुषोत्तरो धर्मः'[4] इति ज्ञापनार्थमुक्तम्। **साधवः संयता** इति। ज्ञानादिलक्षणाभिः[5] पौरुषेयीभिः शक्तिभिः साध-

---

१ 'अविरते प्रव्रजित' इति घ-पाठः। २ 'आचार्य०' इति घ-पाठः। ३ 'गुणो यस्तत्' इति ङ-पाठः।

४ "धम्मो पुरिसप्पभवो पुरिसवरदेसिओ पुरिसजिट्ठो। लोए वि पहू पुरिसो किं पुण लोगुत्तमे धम्मे?॥" इत्युल्लेख उपदेशमालायां (गा० १६)। ५ 'लक्ष्याभिः' इति ग-पाठः।

यन्तीति साधवो मोक्षम्, संयता इति मूलोत्तरगुणसम्पन्नाः द्वादशविधसम्भोगभाजः समनो- ज्ञानदर्शनचारित्राणि मनोज्ञानि सह मनोज्ञैः समनोज्ञाः तानि तानि वा सम्भोगकारणानि संविज्ञेष्वपि विद्यन्ते ॥

**भा०—एषामन्नपानवस्त्रपात्रप्रतिश्रयपीठफलकसंस्तारादिभिर्धर्मसाधनैरुप- ग्रहः शुश्रूषा भेषजक्रिया कान्तारविषमदुर्गोपसर्गेषु अभ्युपपत्तिरित्येतदादि वैयावृत्त्यम् ॥ २४ ॥**

**टी०**—एषामित्यादि। आचार्यादयः समनोज्ञान्ताः सम्बन्ध्यन्ते एषामित्यनेन। **अन्न-** पानादयः प्रसिद्धाः तैरुपग्रहः—उपकारः। शुश्रूषा—विश्रामणादिका। भेषजक्रिया-मान्द्ये सति तदनुरूपभैषजसम्पादनम्। कान्तारम्—अरण्यम्। श्वापदबहुलत्वाद् विषमदुर्गं—गर्ता- कूपकण्टकादिप्रचितम्। उपसर्गो—ज्वराऽ-तीसार-कास-श्वास-मरकादिः। अभ्युपपत्तिः— अभ्युद्धरणं परिपालनं परिरक्षणमन्नपानादि(भिः) यत् तद् वैयावृत्त्यमिति ॥ २४ ॥

सम्प्रति स्वाध्यायोऽभिधीयते—

स्वाध्यायस्य पञ्चविधत्वम्

## सूत्रम्—वाचना-प्रच्छना-ऽनुप्रेक्षा-ऽऽम्नाय-धर्मोपदेशाः ॥ ९–२५ ॥

**भा०—स्वाध्यायः पञ्चविधः। तद्यथा—वाचना, प्रच्छनं, अनुप्रेक्षा, आ- म्नायः, धर्मोपदेश इति। तत्र वाचनं शिष्याध्यापनम्। प्रच्छनं ग्रन्थार्थयोः। अनुप्रेक्षा ग्रन्थार्थयोरेव मनसाऽभ्यासः। आ- म्नायो घोषविशुद्धं परिवर्तनं गुणनं, रूपादानमित्यर्थः। अर्थो- पदेशो व्याख्यानं अनुयोगवर्णनं धर्मोपदेश इत्यनर्थान्तरम् ॥ २५ ॥**

धर्मोपदेशस्य पर्यायाः

**टी०**—स्वाध्यायः पञ्चविध इत्यादि। तद्यथेत्यनेन भेदपञ्चकोपन्यासं सूचयति। तत्र वाचनेत्यादि। शिष्याणामध्यापनं वाचना कालिकस्योत्कालिकस्य वाऽऽलापकप्र- दानम्। ग्रन्थः[2] सूत्रार्थः सूत्राभिधेयं तद्विषयं प्रच्छनम्। सन्देहे सति ग्रन्थार्थयोर्मनसाऽभ्या- सोऽनुप्रेक्षा। न तु बहिर्वर्णोच्चारणमनुश्रावणीयम्। आम्नायोऽपि परिवर्तनं उदात्तादिपरि- शुद्धमनुश्रावणीयमभ्यासविशेषः। गुणनं—सङ्ख्यानं पदाक्षरद्वारेण रूपादानमेकरूपम्[3]। एका परिपाटी द्वे रूपे त्रीणि रूपाणीत्यादि। धर्मोपदेशस्तु सूत्रार्थकथनं व्याख्यानमनुयोगवर्णन- मनुयोगद्वारप्रक्रमेण श्रुतचरणधर्मोपदेश इत्यनर्थान्तरमिति ॥ २५ ॥

---

१ 'म्नाम्ना' इति ग-पाठः। २ 'ग्रन्थः सूत्राभि०' इति ग-ङ-पाठः। ३ 'रुपदान०' इति क-पाठः।

अधुना व्युत्सर्गो व्याख्यायते—

## सूत्रम्—बाह्या-ऽभ्यन्तरोपध्योः ॥ ९-२६ ॥

**भा०—व्युत्सर्गो द्विविधः-बाह्योऽभ्यन्तरश्च । तत्र बाह्यो द्वादशरूपकस्योपधेः । अभ्यन्तरः शरीरस्य कषायाणां चेति ॥ २६ ॥**

**टी०—व्युत्सर्गो द्विविध** इत्यादि । विविधस्योत्सर्गो व्युत्सर्गः । संसक्तासंसक्तपानादेः विधिना प्रवचनविहितेनोत्सर्गो व्युत्सर्गः । स द्विप्रकारः बाह्या-ऽभ्यन्तरभेदात् । तत्र तयोर्बाह्यस्य तावद् **द्वादशरूपकस्योपधेः** पात्रतद्बन्धपात्रस्थापनादीनि द्वादश रूपाण्यस्येति द्वादशरूपकः । उपग्राहकत्वादुपकारत्वादुपधिः । **अभ्यन्तरः शरीरस्य कषायाणां चेति** । शरीरस्य पर्यन्तकाले विज्ञायाकिञ्चित्करत्वं शरीरकं परित्यजति-उज्झति । यथोक्तम् ( भग० श० २, उ० १, सू० ९५ )-" जं पि य इमं सरीरं इट्ठं कंतं " इत्यादि । क्रोधादयः कषायाः संसारपरिभ्रमणहेतवः तेषां व्युत्सर्गः-परित्यागो मनो-वाक्-कायैः कृत-कारिता-ऽनुमतिभिश्चेति ॥ २६ ॥

सम्यक्त्वादित्रयं मोक्षसाधनं, तत्रापि ध्यानं गरीयस्तन्निरूपणायाह—

ध्यानस्य लक्षणम्

## सूत्रम्—उत्तमसंहननस्यैकाग्रचिन्तानिरोधो ध्यानम् ॥ ९-२७ ॥

**भा०—उत्तमसंहननं वज्रर्षभनाराचं वज्रनाराचं नाराचं अर्धनाराचं च । तद्युक्तस्यैकाग्रचिन्तानिरोधश्च ध्यानम् ॥ २७ ॥**

**टी०—उत्तमं**-प्रकृष्टं **संहननम्**-अस्थ्नां बन्धविशेषः । उत्तमं संहननमस्येत्युत्तमसंहननं, तदुत्तमसंहननं चतुर्विधं वज्रर्षभनाराचं वज्रनाराचं नाराचं अर्धनाराचम् । वज्रं-कीलिका, ऋषभः-पट्टः, नाराचो-मर्कटबन्धः । प्रथमं त्रितययुक्तम् । द्वितीयसंहनने पट्टो नास्ति । तृतीये वज्रर्षभौ न स्तः । ततो वज्रर्षभं अर्धवज्रर्षभं नाराचं चेत्यनेन चत्वारो भेदाः प्रतिपाद्याः उत्तमसंहननवाच्याः । उत्तमसंहननग्रहणं निरोधे कार्ये प्रतिविशिष्टसामर्थ्यप्रतिपादनार्थम् । तस्योत्तमसंहननस्य **एकाग्रचिन्तानुरोधो ध्यानम्** । अग्रम्-आलम्बनं एकं च तदग्रं चेत्येकाग्रं, एकालम्बनमित्यर्थः । एकस्मिन्नालम्बने चिन्तानिरोधः । चलं चित्तमेव चिन्ता, तन्निरोधस्तस्यैकत्रावस्थापनमन्यत्राप्रचारो निरोधः । अतो निश्चलं स्थिरमध्यवसानमेकालम्बनं छद्मस्थविषयं ध्यानम् । केवलिनां पुनर्वाक्काययोगनिरोध एव ध्यानम्, अभावान्मनसः । नह्यवाप्तकेवलस्य

१ छाया—

यदपि च इदं शरीरमिष्टं कान्तम् ।

२ 'भमर्धवज्रनाराचं च' इति घ-पाठः । ३ 'नाराचं कीलका' इति ग-पाठः । ४ 'त्रिनयन' इति च-पाठः । ५ 'मन्यत्रापवा निरोधः' इति च-पाठः ।

मनोव्यापारः समस्ति, सकलकरणग्रामनिरपेक्षत्वादिति। तद्युक्तस्येति तेन प्रतिविशिष्टेन संहननत्रयेणाद्येन चतुर्विधेन वा युक्तस्य-सम्पन्नस्य। एकाग्रचिन्तानिरोधः। चशब्दाद् वाक्-कायनिरोधश्च ध्यानम्। अत्र च ध्याता संसार्यात्मा ध्यानस्वरूपमेकाग्रचिन्तानिरोधः। ध्यातिर्ध्यानमिति भावसाधनः। कालतो मुहूर्तमात्रं चतुःप्रकारमार्तादिभेदेन। ध्येयप्रकारास्त्वमनोज्ञविषयसंप्रयोगादयः। शोकाक्रन्दनविलपनादिलक्षणमार्तं, उत्सन्नबद्धादिलक्षणं रौद्रं, जिनप्रणीतभावश्रद्धानादिलिङ्गं धर्म्यं, अबाधाऽसम्मोहादिलक्षणं शुक्लम्। फलं पुनस्तिर्यङ्-नरक-देवगत्यादि-मोक्षाख्यमिति क्रमेण उत्तमसंहननपदार्थलभ्यो ध्याता अभिहितः। ध्यानस्वरूपं भावसाधनता च विज्ञेया ॥ २७ ॥

सम्प्रति ध्यानकालप्रमाणनिरूपणायाह—

ध्यानस्य कालमानम् **सूत्रम्—आ मुहूर्तात् ॥ ९–२८ ॥**

**भा०—तद्ध्यानमा मुहूर्तात् भवति परतो न भवति दुर्ध्यानत्वात् ॥ २८ ॥**

**टी०**—आ मुहूर्तादिति। घटिकाद्वयं मुहूर्तः। अभिविधावाङ्। अन्तर्मुहूर्तपरिमाणं न परतो मुहूर्तादित्यर्थः। तद्ध्यानमित्यादि। तदेतत् सामान्यलक्षणोक्तं ध्यानं चतुर्विधमप्यामुहूर्तात् भवति, परतो न भवत्यशक्तेरेव। यस्मान्मोहनीयकर्मानुभावात् संक्लेशाद् वा विशोध्य वान्तर्मुहूर्तात् परावर्तते। उक्तं च—

" नान्तर्मुहूर्तकालं, व्यतीत्य शक्यं हि जगति सङ्क्लेष्टुम्।
नापि विशोद्धुं शक्यं, प्रत्यक्षो ह्यात्मनः सोऽर्थः ॥"—आर्या

किं पुनः कारणं परतो न ध्यानमस्तीत्याह—दुर्ध्यानत्वात्। दुरितिशब्दो वैकृते वर्तते। विकृतो वर्णो दुर्वर्ण इति यथा, एवं विकृतं ध्यानं विकारान्तरमापन्नं दुर्ध्यानमिति। अथवा दुःशब्दस्य अर्थाः व्यृद्धौ दुःशब्दः। ऋद्धिवियुक्ता यवना दुर्यवनं दुष्कं(ष्टं?) बीजमिति। एवं ध्यानलक्षणविनिर्मुक्तं दुर्ध्यानं। अनीप्सायां वा दुःशब्दः। अनीप्सितोऽस्या भग इति दुर्भगा कन्या। एवमनीप्सितं दुर्ध्यानमिति तद्भावो दुर्ध्यानत्वं तस्माद् दुर्ध्यानत्वान्न परतो ध्यानमस्ति ॥ २८ ॥

सामान्येन ध्यानलक्षणमभिधाय सम्प्रति भेदकथनायाह—

ध्यानस्य चतुर्विधता **सूत्रम्—आर्त-रौद्र-धर्म्य-शुक्लानि ॥ ९–२९ ॥**

**भा०—तच्चतुर्विधं भवति—तद्यथा आर्तं, रौद्रं, धर्म्यं, शुक्लमिति ॥ २९ ॥**

तेषाम्—

---

१ 'ध्यानमिति' इति ग-पाठः। २ 'धर्मं' इति घ-पाठः। ३ 'धर्मं' इति घ-पाठः।

**टी०**—कृतद्वन्द्वान्यार्तादीनि नपुंसकबहुवचनेन निर्दिष्टानि—**तच्चतुर्विधं भवती-त्यादि**। तद्ध्यानं सामान्येन लक्षितं चतुर्विधं भवति—चतुर्धा भिद्यते। चतस्रो विधा यस्य तच्चतुर्विधम्। [1]विधाप्रदर्शनायाह—**तद्यथेति**। आर्तं, रौद्रं, धर्म्यं, शुक्लमिति। तत्रार्तस्य शब्दनिर्भेदाभिधानम्। ऋतशब्दो दुःखपर्यायवाच्याश्रीयते। अर्तेर्गमिक्रियापरिस्पन्दिनो निष्ठाप्रत्ययान्तः। तस्मादागतार्थे तद्धितप्रत्ययो णित्। आर्तं दुःखभवं दुःखानुबन्धि चेति। तथाचामनोज्ञविषयप्रयोगो दुःखम्। वेदना च नेत्र-शिरोदशनादिका दुःखमेव। तथा मनोज्ञविषयविप्रयोगोऽशर्मैव। निदा-नमपि चित्तदुःखासिकयैव क्रियत इत्युपपन्नः प्रत्ययार्थः। तथा रोदयत्यपरानिति रुद्रो दुःखस्य हेतुः तेन कृतं तत्कर्म वा रौद्रं प्राणिवधबन्धपरिणत आत्मैव रुद्र इत्यर्थः। धर्मः क्षमादिदश-लक्षणकस्तस्मादनपेतं धर्म्यम्। शुक्लं—शुचि निर्मलं सकलकर्मक्षयहेतुत्वादिति। शुग्वा दुःख-मष्टप्रकारं कर्म तां च शुचं क्लमयति-ग्लपयति निरस्यति शुक्लं इत्येतावदेव ध्यानं चतुर्विध-मिति ॥ २९ ॥

(आर्तादीनां व्युत्पत्तिः)

तेषामित्यनेन सूत्रं सम्बध्नाति—

## सूत्रम्—परे मोक्षहेतू ॥ ९-३० ॥

**भा०—तेषां चतुर्णां ध्यानानां परे धर्म्य-शुक्ले मोक्षहेतू भवतः। पूर्वे त्वार्तरौद्रे संसारहेतू इति ॥ ३० ॥**

**टी०**—**तेषां चतुर्णामित्यादि**। यानि प्रस्तुतानि ध्यानानि तेषामार्त-रौद्र-धर्म-शुक्लानां चतुर्णां ध्यानानां सूत्रसन्निवेशमाश्रित्य **परे धर्म्य-शुक्ले मोक्षहेतू**—मुक्तेः कारणतां प्रतिपद्येते। तत्रापि साक्षात् मुक्तेः कारणीभवतः। पाश्चात्यौ शुक्लध्यानभेदौ सूक्ष्मक्रियमप्रतिपाति व्युपरत-क्रियां वा निवर्ति, धर्म्यध्यानं पुनराद्याभ्यां सह शुक्लभेदाभ्यां पारंपर्येण मोक्षस्य कारणं भवति, न साक्षादिति। ततश्चैतद्धर्म्यध्यानादि देवगतेर्मुक्तेश्च कारणं, न मुक्तेरेव। अर्थादिदमगम्यमान-माह—**पूर्वे त्वार्तरौद्रे संसारहेतू** इति। आर्त-रौद्रयोः संसारहेतुतैव, न जातुचिन्मुक्तिहेतुता। संसारश्च नारकादिभेदश्चतुर्गतिक इति। परमार्थतस्तु रागद्वेषमोहाः संसारहेतवः। तदनुगतं चार्तरौद्ररूपमपि प्रकृष्टतमरागद्वेषमोहभाजः, अतः संसारपरिभ्रमणहेतुता तयोरिति ॥ ३० ॥

**भा०—अत्राह—किमेषां लक्षणमिति ? । अत्रोच्यते—**

**टी०**—सम्प्रति ध्येयप्रकाराः विषयविषयिविकल्पनिमित्तभेदेनोच्यन्ते—**अत्राहेत्यादि**। सम्बन्धो लक्ष्यते येन तल्लक्षणं विलापशोकादि। अमनोज्ञविषयसम्बन्धे क्रन्दति शोचतीति लक्ष्यते आर्तध्यायी ॥

---

१ 'तत्प्रदर्शनाय' इति ङ पाठः। 'विधानप्र०' इति च पाठः।

आर्तस्य प्रथमो विकल्पः

**सूत्रम्—आर्तममनोज्ञानां सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः॥ ९–३१ ॥**

**भा०—अमनोज्ञानां विषयाणां सम्प्रयोगे तेषां विप्रयोगार्थं यः स्मृतिसमन्वाहारो भवति तदार्तध्यानमित्याचक्षते ॥ ३१ ॥ किञ्चान्यत्—**

टी०—**आर्तममनोज्ञानां** इत्यादि। आर्तशब्दः पूर्ववद् व्याख्येयः। अयं चापरप्रकारः। अर्तिर्धातुर्दुःखार्थः। तस्यार्तिरिति रूपम्। अर्तिश्च–दुःखं शारीरं मानसं चानेकप्रकारं तस्यां भवमार्तं ध्यानम्। **अमनोज्ञा**-अनिष्टाः शब्दादयः तेषां सम्बन्धे इन्द्रियेण सह सम्पर्के सति चतुर्णां शब्द-स्पर्श-रस-गन्धानामेकस्य च योग्यदेशावस्थितस्य द्रव्यादेस्तेन[1] विषयिणा ग्राह्यग्राहकलक्षणे **सम्प्रयोगे** सति **तद्विप्रयोगायेति**। तदित्यमनोज्ञविषयाभिसम्बन्धः। तेषाममनोज्ञानां शब्दादिनां **विप्रयोगः** अपगमस्तदर्थं विप्रयोगायानिष्टशब्दादिविषयपरिहाराय यः **स्मृतिसमन्वाहारस्तदार्तम्**। स्मृतिसमन्वाहारो नाम तद्विप्रयोगादेवानुग्रहप्रतिपत्तीच्छया य आत्मनः प्रणिधानविशेषः स समन्वाहारः स्मृतेः कथमहमस्मादमनोज्ञविषयसम्प्रयोगाद् विमुच्येयेति। स्मर्यतेऽनेनेति स्मृतिर्मनोऽभिधीयते। स्मृतिहेतुत्वाद् वा स्मृतिर्मनः। तस्याः स्मृतेः प्रणिधानरूपायाः समन्वाहरणं समन्वाहारः। अमनोज्ञविषयविप्रयोगोपाये व्यवस्थापनं मनसो निश्चलमार्तध्यानं केनोपायेन वियोगः स्यादित्येकतानमनोनिवेशनमार्तध्यानमित्यर्थः ॥ ३१ ॥ किञ्चान्यदिति सम्बध्नाति।

आर्तशब्दस्य निष्पत्तिः

प्रकारान्तरमन्यदस्यार्तस्यास्तीत्याह—

आर्तस्य द्वितीयो विकल्पः

**सूत्रम्—वेदनायाश्च ॥ ९–३२ ॥**

टी०—वेदनं-वेदनाया अनुभवः। अनन्तरसूत्रमनुवर्तते तदभिसम्बध्नन् भाष्यकृदाह—

**भा०—वेदनायाश्चामनोज्ञायाः सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहार आर्तमिति ॥ ३२ ॥ किञ्चान्यत्—**

टी०—**वेदनाया अमनोज्ञाया** इत्यादि। सुखा दुःखा चोभयी वेदना। तत्रामनोज्ञायाः **सम्प्रयोगे** वेदनायाः प्रकुपितपवनपित्तश्लेष्मसन्निपातनिमित्तैरुपजातायाः शूलशिरःकम्पज्वराक्षिश्रवणदशनादिकायास्त**द्विप्रयोगाय स्मृतिसमन्वाहारो** ध्यानमार्तमेष द्वितीयो विकल्पः। किञ्चान्यदित्यार्तप्रकारान्तरं दर्शयति—

---

१ 'स्वेन' इति ख पाठः।

आर्तस्य तृतीय-विकल्पः

## सूत्रम्—विपरीतं मनोज्ञानाम् ॥ ९–३३ ॥

**भा०—मनोज्ञानां विषयाणां मनोज्ञायाश्च वेदनाया विप्रयोगे तत्सम्प्रयोगाय स्मृतिसमन्वाहार आर्तम् ॥ ३३ ॥ किञ्चान्यत्—**

टी०—मनोज्ञा-अभिरुचिता इष्टाः प्रीतिहेतवः तेषां **विपरीतं** संयोजनं कार्यम् । **मनोज्ञानामित्यादि** । **मनोज्ञानां विषयाणां** वेदनायाश्च **मनोज्ञायाः** विपरीतप्रधानार्थाभिसम्बन्धो विपरीतशब्देन क्रियत इत्याह—**विप्रयोगे तत्सम्प्रयोगायेत्यादि**। तत्सम्प्रयोगार्थः तत्सम्प्रयोगाय सम्प्रयोगप्रयोजनः **स्मृतेः समन्वाहारः** । कथं नु नाम भूयोऽपि तैः सह मनोज्ञविषयैः संप्रयोगः स्यान्ममेति । एवं प्रणिधत्ते दृढं मनस्तदप्यार्तमिति ॥ ३३ ॥

किञ्चान्यदिति तुरीयमार्तप्रकारं दर्शयति—

आर्तस्य चतुर्थो विकल्पः

## सूत्रम्—निदानं च ॥ ९–३४ ॥

टी०—निपूर्वाद् दातेर्लवनार्थस्य ल्युटि रूपम् । निदायते-लूयते लुप्यते येनात्महितमैकान्तिकात्यन्तिकानाबाधसुखलक्षणं तन्निदानमिति । चशब्दः समुच्चये । एष चार्तप्रकार इत्यर्थः ।

निदानशब्दस्य सिद्धिः ।

**भा०—कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्तध्यानं भवति ॥ ३४ ॥**

टी०—**कामोपहतचित्तानामित्यादि** । काम-इच्छाविशेषः शब्दाद्युपयोगविषयः । अथवा मदनः-कामः चिरमुग्रतपोनिष्ठाय कर्मक्षपणक्षमदीर्घदर्शितया स्वल्पस्य विनश्वरस्यावितृप्तिकारिणः सुरमनुजसुखैश्वर्यसौभाग्यादेः कृते तत्रैव कृतदृढप्रणिधाना बहुविनश्वरं सततृप्तिकारणमुक्तिसुखमनुपममेवमन्य[1], प्रवर्तमानाः कामोपहतचेतसः पुनर्भवविषयगृद्धा विदधति यन्निदानं तदार्तध्यानं निदानरूपम् । एष एवार्थो विभक्त्यन्तरेण प्रतिपादितः । **कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्तध्यानं भवतीति**। तस्यैतस्यार्तध्यानस्य चतुःप्रकारस्यापि शोकादीनि लक्षणानि भवन्ति । यैरार्तध्यायी लक्ष्यते करतलपर्यस्तप्र[2]म्लानवदनः शोचति क्रन्दति विलपति हा हा अहो धिक् कष्टं हुं मां नस्योरस्ताडं[3] परिदेवते दीर्घं निश्वसिति कवोष्णं शून्यव्याक्षिप्तचित्त इवोपलक्ष्यते । तथा कलहमायामात्सर्यासूयास्तथा अरतिः स्त्रीभोजनकथासुहृत्स्वजनानुरागाश्च तस्य लक्षणानि भवन्ति परिस्फुटानीति ॥ ३४ ॥

इत्थमार्तध्यानं सभेदकमभिधायाऽधुनास्यैव ध्यातारः स्वामिनो निरूप्यन्ते इति तदर्थमाह—

---

१ 'मवगम्य' इति च पाठः । २ 'पर्यस्तप्रम्लान०' इति ग-पाठः, 'पर्यन्तप्रलान०' इति तु ङ-पाठः । ३ 'मारस्ताडनं' इति ङ-पाठः ।

आर्तध्यानस्य स्वामिनः

सूत्रम्—तदविरतदेशविरतप्रमत्तसंयतानाम् । ९-३५॥

भा०—तदेतदार्तध्यानं अविरतदेशविरतप्रमत्तसंयतानामेव भवतीति ॥ ३५ ॥

टी०—तदित्यार्तमभिसम्बध्यते । तदार्तध्यानमविरतसम्यग्दृष्ट्यादीनां त्रयाणां स्वामिनां सम्भवति । एतस्य त्रयः स्वामिनश्चतुर्थ-पञ्चम-षष्ठगुणस्थानवर्तिनः क्रमेणाविरत-देशविरतप्रमत्तसंयताः[1] । अविरतश्चासौ सम्यग्दृष्टिश्चेति अविरतसम्यग्दृष्टिः प्रत्याख्यानाव-रणोदये सति विरतिलक्षणस्य संयमस्याभावादविरतसम्यग्दृष्टिः । आह च—

"आवृण्वन्ति प्रत्या-ख्यानं स्वल्पमपि येन जीवस्य ।
तेनाप्रत्याख्याना-वरणास्ते नञ् हिंसोऽल्पार्थः ॥ १ ॥—आर्या
प्रत्याख्यानावरणसदृक्त्वाद् वा तत् तथा भवति सिद्धम् ।
न त्वब्राह्मणवचने, तत्सदृशः पुरुष एवेष्टः ॥ २ ॥"—आर्या

औपशमिक-क्षायोपशमिक-क्षायिकभेदाच्च त्रिविधं सम्यग्दर्शनं, तद्योगात् सम्यग्दृष्टिः देशविरतः संयतासंयतः हिंसादिभ्यो देशतो विरतत्वात् संयतः, अन्यतः सावद्ययोगादनिवृत्त इति स एवासंयतः, सोऽविरतसम्यग्दृष्टिस्थानादसंख्येयानि विशोधिस्थानानि गत्वा अप्रत्या-ख्यानावरणकषायेषु क्षयोपशमं नीतेषु प्रत्याख्यानावरणकषायोदयात् कृत्स्नप्रत्याख्यानाभावाद् देशविरतः । आह च—

"तस्मादविरतसम्यग्-दृष्टिस्थानाद् विशोधिमुपगम्य ।
स्थानान्तराण्यनेका-न्यारोहति पूर्वविधिनैव ॥ १ ॥—आर्या
क्षपयत्युपशमयति वा, प्रत्याख्यानावृतः कषायांस्तान् ।
सततो येन भवेत् त-स्य विरमणे बुद्धिरल्पेऽल्पा ॥ २ ॥ —,,
तस्य तथैव विशोधि-स्थानान्यारोहतोऽतिसङ्ख्यानि ।
गच्छन्ति सर्वथाऽपि, प्रकर्षतस्ते क्षयोपशमम् ॥ ३ ॥—,,
श्रावकधर्मो द्वादश-भेदः सञ्जायते ततस्तस्य ।
पञ्चत्रिचतुःसङ्ख्य-व्रतगुणशिक्षामयः शुद्धः ॥ ४ ॥—,,
सर्वं प्रत्याख्यानं, येनावृण्वन्ति तदभिलपतोऽपि ।
तेन प्रत्याख्याना-वरणास्ते निर्विशेषोक्ताः ॥ ५ ॥"—,,

इदानीं प्रमत्तसंयतः । तस्मादसङ्ख्येयानि विशोधिस्थानान्यारोहतस्तृतीयकषायेषु प्रकर्षात् क्षयोपशमं गतेषु सर्वसावद्ययोगप्रत्याख्यानविरतिर्भवति । उक्तं च—

१ 'संयतानां' इति ङ-पाठः । २ 'वरणो देशविरति' इति च-पाठः । ३ 'संयतीसंयतः' इति घ-पाठः । ४ 'धितस्थानानि' इति च-पाठः । ५ 'शमनीयेषु' इति घ-पाठः ।

"देशविरतोऽपि ततः, स्थानात् स विशोधिमुत्तमां प्राप्य ।
स्थानान्तराणि पूर्व-विधिनैव संयात्यनेकानि ॥ १ ॥ —आर्या
क्षपयत्युपशमयति वा, प्रत्याख्यानावृतः कषायांस्तान् ।
सततोदयेन भवेत्, तस्य विरमणे सर्वतोऽपि मतिः ॥ २ ॥—,,
छेदोपस्थाप्यं चा-वृत्तं सामायिकं चरित्रं वा ।
स ततो लभते प्रत्या-ख्यानावरणक्षयोपशमात् ॥ ३ ॥ —,,

तस्येदानीं महाव्रतगुप्तिसमितियुक्तस्य कषायनिग्रहाद् इन्द्रियदमाच्च निरुद्धाश्रवस्य निर्वेदादिवैराग्यभावनाभिः स्थिरीकृतसंवेगस्य यथोक्तद्वादशप्रकारतपोयोगात् सञ्चितानि कर्माणि निर्जरयतः सूत्रानुसाराद् यतमानस्यापि मोहनीयकर्मानुभावात् सङ्क्लेशाद् वा विशोध्या वाऽन्तर्मुहूर्तात् परावर्तते । ततः सञ्ज्वलनकषायोदयाद्, इन्द्रियविकथाप्रमादाद्, योगदुष्प्रणिधानात्, कुशलेष्वनादराच्च प्रमत्तसंयतो भवति, तस्मात् सङ्क्लेशाद्धायां वर्तमानः प्रमत्तसंयतः । एते त्रयोऽप्यार्तध्यायिनो भवन्ति, आर्तध्यानस्वामिन इत्यर्थः । एतदार्तध्यानमविरतादीनामेव भवति, नाप्रमत्तसंयतादीनामित्यर्थः । तदेतदार्तं नातिसंक्लिष्टकापोतनीलकृष्णलेश्यानुयायि द्रष्टव्यमिति॥३५॥

सम्प्रति रौद्रध्यानं सस्वामिकमभिधित्सुराह—

रौद्रध्यानस्य स्वामिनः

**सूत्रम्—हिंसा-ऽनृत-स्तेय-विषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ॥ ९–३६ ॥**

**भा०—हिंसार्थमनृतवचनार्थं स्तेयार्थं विषयसंरक्षणार्थं च स्मृतिसमन्वाहारो रौद्रध्यानं, तदविरतदेशविरतयोरेव भवति ॥ ३६ ॥**[४]

**टी०—हिंसा अनृतं स्तेयं विषयसंरक्षणं** चेति द्वन्द्वः । ततो द्वन्द्वसमासः । लिङ्गान्यस्योत्सन्नबहुज्ञानामरणदोषाः । तत्र हिंसानन्दादीनां चतुर्णां प्रकाराणामन्यतमभेदेऽनवरतमविश्रान्त्या प्रवर्तमानस्य बहुकृत्वः सञ्चितदोष उत्सन्नशब्दवाच्यः । यथोत्सन्नकालान्तरमुपचितमिति । तथा हिंसानन्दादिषु[५] चतुर्ष्वपि प्रवर्तमानस्याभिनिविष्टान्तःकरणस्य बहुदोषता अज्ञानदोषता तेष्वेव हिंसादिषु अधर्मकार्येष्वभ्युदयकार्यबुद्धिव्यपाश्रयस्य चैकतानविधानावलम्बितसंसारमोचकस्येव भवति । अथवा नानाप्रकारेषु हिंसानन्दाद्युपायेषु प्रवर्तमानस्य प्रचण्डक्रोधाविष्टस्य महामोहाभिभूतस्य तीव्रवधबन्धसंक्लिष्टाध्यवसायस्य नानाविधदोषता, पाठान्तरव्याख्याने तृतीयविकल्पस्य । तुर्यदोषस्तु मरणावस्थायामपि हिंसानन्दादिकृतः स्वल्पोऽपि पश्चात्तापो यस्य नास्ति तस्यामरणान्तदोषतेति ॥ ३६ ॥

---

१ 'विरतेऽपि' इति ङ–पाठः । २ 'चरित्रं' इति ङ–पाठः । ३ 'प्रमोदात्' इति ङ–पाठः । ४ भाष्यस्य विवरणं समुपलभ्यतेऽनन्तरसूत्रटीकायाम् । ५ 'हिंसादिषु' इति च-पाठः ।

आर्तरौद्रे व्याख्याते। सम्प्रति धर्मध्यानव्याख्यावसरः। तच्च सभेदं सस्वामिकमाख्यायते—

धर्मध्यानस्य चातुर्विध्यं तत्स्वामिनश्च

**सूत्रम्—आज्ञा-ऽपाय-विपाक-संस्थानविचयाय धर्ममप्रमत्तसंयतस्य ॥ ९-३७ ॥**

**भा०—आज्ञाविचयाय अपायविचयाय विपाकविचयाय संस्थानविचयाय च स्मृतिसमन्वाहारो धर्मध्यानम् । तदप्रमत्तसंयतस्य भवति ॥ ३७ ॥ किञ्चान्यत्—**

**टी०**—आज्ञादीनां कृतद्वन्द्वानां विचयशब्देन सह षष्ठीसमासः। आज्ञादीनां विचयः—पर्यालोचनम्। विचयशब्दः प्रत्येकमभिसम्बध्यते। आज्ञाऽपायविपाकसंस्थानविचयशब्दात् तादर्थ्ये चतुर्थी। धर्मशब्दो व्याख्यातः। **अप्रमत्तसंयतस्येति** स्वामिनिर्देशः। तत्राज्ञा—सर्वज्ञप्रणीत आगमः। तामाज्ञामित्थं विचिनुयात्—पर्यालोचयेत्—पूर्वापरविशुद्धामतिनिपुणामशेषजीवकायहितामनवद्यां महार्थां महानुभावां निपुणजनविज्ञेयां द्रव्यपर्यायप्रपञ्चवतीमनाद्यनिधनां "इच्चेइयं दुवालसंगं गणिपिडगं न कयाइ णासी"[1] इत्यादि (नन्दी सू० ५८) वचनात्। तत्र प्रज्ञायाः परिदुर्बलत्वादुपयुक्तोऽपि सूक्ष्मया शेमुष्या यदि नावैति भूतमर्थं सावरणज्ञानत्वात्। यथोक्तम्—

"नहि नामानाभोग-च्छद्मस्थस्येह कस्यचिन्नास्ति।
ज्ञानावरणीयं हि, ज्ञानावरणप्रकृति कर्म ॥ १ ॥"—आर्या

तथाप्येवं विचिन्वतोऽ[2]वितथवादिनः क्षीणरागद्वेषमोहाः सर्वज्ञा नान्यथाव्यवस्थितमन्यथावयन्ति भाषन्ते वाऽनृतकारणाभावात्। अतः सत्यमिदं शासनमनेकदुःखगहनात् संसारसागरादुत्तारकमित्याज्ञायां **स्मृतिसमन्वाहारः**। प्रथमं धर्मध्यानमाज्ञाविचयाख्यम्।

अपायविचयं द्वितीयं धर्मध्यानमुच्यते। अपाया-विपदः शारीर-मानसानि दुःखानीति पर्यायास्तेषां विचयः-अन्वेषणमिहामुत्र च रागद्वेषाकुलितचेतोवृत्तयः सत्त्वा मूलोत्तरप्रकृतिविभागार्पितजन्मजरामरणार्णवभ्रमणपरिखेदितान्तरात्मानः सांसारिकसुखप्रपञ्चेष्ववितृप्तमानसाः कायेन्द्रियादिष्वास्रवद्वारप्रवाहेषु वर्तमाना मिथ्यात्वाज्ञानाविरतिपरिणतिभिर्निर्वृत्ताः। प्रातिपदिकात् तादर्थ्ये चतुर्थीबहुवचनम्। हिंसायै हिंसार्थं हिंसाप्रयोजनं रौद्रं भवति ध्यानम्। एवमनृताय स्तेयाय विषयसंरक्षणाय चेति वाच्यं रौद्रमित्युक्तं निर्वचनं प्राक्। अविरतश्च

[1] छाया—
इत्येतद् द्वादशाङ्गं गणिपिटकं न कदापि नासीत्।

[2] 'विचिन्वता' इति च-पाठः।

देशविरतश्च कृतद्वन्द्वौ स्वामिनौ रौद्रध्यानस्य निर्दिष्टौ षष्ठीद्विवचनेन । अविरत-देशविरतयोस्तु रौद्रध्यानमेतावस्य ध्यातारावित्यर्थः । एतदेव भाष्यकारो विवृणोति–**हिंसार्थमित्यादिना** । स्पष्टमेव तादर्थ्यं दर्शयति । "प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा" ( अ० ७, सू० ८ ) तच्च सत्त्वव्यापादनोद्बन्धपरितापनताडनकरचरणश्रवणनासिकाऽधरवृषणशिश्नादिच्छेदनस्वभावं हिंसानन्दम् । तत्र स्मृतिसमन्वाहारो रौद्रध्यानम् । ये च जीवव्यापादनोपायाः परस्य च दुःखोत्पादनप्रयोगास्तेषु च स्मृतिसमन्वाहारो हिंसानन्दमिति प्रथमो विकल्पः ।

प्रबलरागद्वेषमोहस्य अनृतप्रयोजनवत् कन्याक्षितिनिक्षेपापलापपिशुनासत्यासद्भूतघाताभिसन्धानप्रवणमसदभिधानमनृतं तत्परोपघातार्थमनुपरततीव्ररौद्राशयस्य स्मृतेः समन्वाहारः । तत्रैवं दृढप्रणिधानमनृतानन्दमिति ।

**स्तेयार्थं** स्तेयप्रयोजनमधुनोच्यते । तीव्रसङ्क्लेशाध्यवसायस्य ध्यातुः प्रबलीभूतलोभप्रचाराहितसंस्कारस्य अपास्तपरलोकापेक्षस्य परस्वादित्सोरकुशलः स्मृतिसमन्वाहारः । द्रव्यहरणोपाय एव चेतसो निरोधः प्रणिधानमित्यर्थः ।

**विषयसंरक्षणार्थं चेति** चतुर्थो विकल्पः । चशब्दः समुच्चये । विषयपरिपालनप्रयोजनं च भवति रौद्रं ध्यानम् । विषमिव यान्ति विसर्पन्ति परिभुज्यमानाः । पृषोदरादित्वात् संस्कारः । अथवा 'षिञ् बन्धने' ( पा० धा० १४७८ ) भोक्तारं विशेषेण विविधं वा सिन्वन्ति–बध्नन्तीति विषयाः–शब्दादयः । तत्साधनानि च चेतनाचेतनव्यामिश्रवस्तूनि विषयशब्दवाच्यानि । विषीदन्ति वा प्राणिनो येषु परिभुञ्जानास्ते विषयाः । यथोक्तं ( **प्रशमरतौ** श्लो० १०७ )—

विषयशब्दस्य निष्पादनम्

"यद्यपि निषेव्यमाणा, मनसः परितुष्टिकारका विषयाः ।
किम्पाकफलादनवद्, भवन्ति पश्चादतिदुरन्ताः ॥"—आर्या

विषयाणां च संरक्षणमुक्तं परिग्रहेष्वप्राप्तनष्टेषु काङ्क्षाशोकौ प्राप्तेषु रक्षणमुपभोगे चावितृप्तिः । इत्थं च विषयसंरक्षणाहितक्रौर्यस्य म्लेच्छमलिम्लुचाग्निक्षेत्रमृद्दायादिभ्यः समुदितायुधस्यानायुधस्य वा रक्षतः तीव्रेण लोभकषायेणानुरक्तचेतसः तद्गतप्रणिधानस्य तत्रैव स्मृतिसमन्वाहारमाचरतो विषयसंरक्षणानन्दम् रौद्रं भवति ध्यानम् । तच्चैतदविरतस्वामिकम् । तौ च पूर्वोक्तलक्षणौ । तयोरेव च भवत्येतत् प्रमत्तसंयतादीनामिति । रौद्रध्यायिनः तीव्रसंक्लिष्टाः कापोतनीलकृष्णलेश्यास्तिस्रस्तदनुगमाच्च नरकगतिमूलमेतत् । पर्याप्तमादाय कर्मजालं दुरन्तं

१ 'ये च व्यापादनो' इति ङ-पाठः । २ 'प्रसंगा' इति च-पाठः । ३ 'ष्वप्राप्तनष्टेषु' इति च-पाठः ।
४ 'त्येव त(?) प्रमत्त' इति ग-पाठः । ५ 'संक्लेशाः' इति ङ-पाठः । ६ 'नीललेश्या' इति ङ-पाठः ।

नरकादिगतिषु दीर्घरात्रमपायैर्युज्यन्ते । केचिदिहापि कृतवैरानुबन्धाः परस्परमाक्रोशवधबन्धाद्यपायभाजो दृश्यन्ते क्लिश्यन्ते इत्यतः प्रत्यवायप्रायेऽस्मिन् संसारेऽत्यन्तोद्वेगाय स्मृतिसमन्वाहारतोऽपायविचयं धर्मध्यानमाविर्भवति ।

तृतीयं धर्मध्यानं विपाकविचयाख्यमुच्यते—विविधो विशिष्टो वा पाको विपाकः—अनुभावः । अनुभावो रसानुभवः । कर्मणां नरक-तिर्यङ्-मनुष्या-ऽमरभवेषु तस्य विचयः—अनुचिन्तनं मार्गणं तदर्पितचेताः । तत्रैव स्मृतिं समन्वाहृत्य वर्तमानो विपाकविचयाध्यायी भवति । ज्ञानावरणादिकमष्टप्रकारं कर्म प्रकृति-स्थित्य-ऽनुभाव-प्रदेशभेदमिष्टानिष्टविपाकपरिणामं जघन्य-मध्यमोत्कृष्टस्थितिकं विविधविपाकम् । तद्यथा—ज्ञानावरणाद् दुर्मेधस्त्वम् । दर्शनावरणाच्चक्षुरादि-

कर्माष्टकस्य फलानि

वैकल्यं निद्राद्युद्भवश्च । असद्वेद्याद् दुःखं, सद्वेद्यात् सुखानुभवः । मोहनीयाद् विपरीतग्राहिता चारित्रविनिवृत्तिश्च[1] । आयुषोऽनेकभवप्रादुर्भावः । नाम्नोऽशुभप्रशस्तदेहादिनिर्वृत्तिः । गोत्रादुच्चनीचकुलोपपत्तिः । अन्तरायादलाभ इति । इत्थं निरुद्धचेतसः कर्मविपाकानुसरण एव स्मृतिसमन्वाहारतो धर्म्यं[2] भवति ध्यानमिति ॥

संस्थानविचयं नाम चतुर्थं धर्मध्यानमुच्यते—संस्थानम्—आकारविशेषो लोकस्य द्रव्याणां च । लोकस्य तावत् तत्राधोमुखमल्लकसंस्थानं[3] वर्णयन्त्यधोलोकं स्थालमिव च तिर्यग्लोकमूर्ध्वमधोमल्लकसमुद्गम् । तत्रापि तिर्यग्लोको ज्योतिर्व्यन्तराकुलः । असङ्ख्येया द्वीप-समुद्रा वलयाकृतयो धर्मा-ऽधर्मा-ऽऽकाश-पुद्गल-जीवास्तिकायात्मका अनादिनिधनसन्निवेशभाजो व्योमप्रतिष्ठाः क्षितिवलयद्वीपसागरनरकविमानभवनादिसंस्थानानि च । तथाऽऽत्मानमुपयोगलक्षणमनादिनिधनमर्थान्तरभूतं शरीराद्, अरूपं कर्तारमुपभोक्तारं च स्वकृतकर्मणः शरीराकारं, मुक्तौ विभागहीनाकारम् । ऊर्ध्वलोको द्वादशकल्पा असकलसकलनिशाकरमण्डलाकृतयो नव ग्रैवेयकाणि पञ्च महाविमानानि मुक्ताधिवासश्च । अधोलोकोऽपि भवनवासिदेवा[4] नारकाधिवसतिः । धर्मा-ऽधर्मावपि लोकाकारौ गतिस्थितिहेतू, आकाशमवगाहलक्षणं, पुद्गलद्रव्यं शरीरादिकार्यं, इत्थं संस्थानस्वाभाव्यान्वेषणार्थं स्मृतिसमन्वाहारो धर्मध्यानमुच्यते । पदार्थस्वरूपपरिज्ञानं तत्त्वावबोधस्तत्त्वावबोधाच्च क्रियानुष्ठानं तदनुष्ठानान्मोक्षावाप्तिरिति । तदेतदप्रमत्तसंयतस्य भवति धर्मध्यानं प्रमत्तसंयतस्थानाद् विशुद्ध्यमानाध्यवसायोऽप्रमत्तस्थानमाप्नोति[5] । यथोक्तम्—

“ निर्ज्ञाता एव तथा, विशोधयोऽसङ्ख्यलोकमात्रास्ताः ।
तरतमयुक्ता या अधि-तिष्ठन् यतिरप्रमत्तः स्यात् ॥ १ ॥”—आर्या

---

१ ‘चारित्रेतिनिवृत्तिश्च’ इति ङ-पाठः । २ ‘धर्म्यध्यानं’ इति ङ-पाठः । ३ ‘तत्राधाद्युखगल्लक’ इति ङ-पाठः । ४ ‘देवनार’ इति ङ-पाठः । ५ ‘स्थान एव नरतच्छमाणकामाप्नोति’ इति ग-पाठः ।

अतो विशुद्धाद्धायां वर्तमानोऽप्रमत्तसंयतस्तस्य च भगवतो धर्मध्यानादितपोयोगैः कर्माणि क्षपयतो विशोधिस्थानान्तराणि आरोहतः ऋद्धिविशेषाः प्रादुर्भवन्त्यणिमादयः । उक्तं हि—

" अवगाहते च स श्रुत-जलधिं प्राप्नोति चावधिज्ञानम् ।
मानसपर्यायं वा, विज्ञानं वा कोष्टादिबुद्धिर्वा ॥ १ ॥—आर्या
चारणवैक्रियसर्वौ-षधा[व]द्यावापि लब्धयस्तस्य ।
प्रादुर्भवन्ति गुणतो, बलानि वा मानसादीनि ॥ २ ॥"—,,

अत्र च श्रेणिप्राप्त्यभिमुखः प्रथमकषायान् दृष्टिमोहत्रयं चाविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतम उपशमश्रेण्याऽभिमुख्यादुपशमयति, क्षपकश्रेण्याभिमुख्यात्[1] क्षपयति । यथोक्तम्—

" क्षपयति तेन ध्याने-न ततोऽनन्तानुबन्धिनश्चतुरः ।
मिथ्यात्वं संमिश्रं, सम्यक्त्वं च क्रमेण ततः ॥ १ ॥—आर्या
क्षीयन्ते हि कषायाः, प्रथमास्त्रिविधोऽपि दृष्टिमोहश्च ।
देशयतायतसम्यग्[2]-दृगप्रमत्तप्रमत्तेषु ॥ २ ॥ —,,
पार्ष्णिग्राहारींस्तान्, निहत्य विगतस्पृहो विदीर्णभयः ।
प्रीतिसुखमपक्षोभः, प्राप्नोति समाधिमत्स्थानम् ॥ ३ ॥"—,, इति ॥ ३७ ॥

किञ्चान्यदित्यनेन स्वाम्यन्तरं सम्बध्नाति—

## सूत्रम्—उपशान्तक्षीणकषाययोश्च ॥ ९-३८ ॥

**भा०—उपशान्तकषायस्य क्षीणकषायस्य च धर्मं ध्यानं भवति ॥ ३८ ॥**

**किञ्चान्यत्—**

**टी०**—चशब्दः समुच्चये । कषायशब्दः प्रत्येकमभिसम्बध्यते । उपशान्ताः कषाया यस्यासावुपशान्तकषायः एकादशगुणस्थानवर्ती । क्षीणाः कषाया यस्य स क्षीणकषायः । भस्मच्छन्नाग्निवदुपशान्ताः निरवशेषतः परिशटिताः क्षीणा विध्मातहुताशनवदनयोश्च उपशान्तक्षीणकषाययोरप्रमत्तसंयतस्य च ध्यानं धर्मं भवति । तत्रोपशान्तक्षीणकषायस्वरूपनिर्ज्ञानाय अधस्तनं गुणस्थानत्रयमवश्यंतया प्ररूपणीयम्, अन्यथा तदपरिज्ञानमेव स्यादिति । अप्रमत्तस्थानादसङ्ख्येयानि विशोधिस्थानान्यारुह्यापूर्वकरणं प्रविशति । समये समये स्थिति-घात-रसघात-स्थितिबन्ध-गुणश्रेणि-गुणसङ्क्रमणकरणमपूर्वं निर्गच्छतीत्यपूर्वकरणम् । अप्राप्तपूर्वकत्वाद् वा

1 'भिमुख' इति ङ-पाठः । 2 'यतायतेन सम्यग्' इति च-पाठः ।

संसारे तदपूर्वकरणम् । न तत्र कस्याश्चिदपि कर्मप्रकृतेरुपशमः क्षयो वा । उपशमनाभिमुख्यात् तत्पुरस्कारादुपशमकः क्षपणार्हत्वाच्च क्षपक इति । उक्तं च—

"स ततः क्षपकश्रेणिं, प्रतिपद्य चरित्रघातिनीः शेषाः ।
क्षपयन् मोहप्रकृतीः, प्रतिष्ठते शुक्ललेश्याकः ॥ १ ॥—आर्या
प्रविशत्यपूर्वकरणं, प्रस्थित एवं ततोऽपरं स्थानम् ।
तदपूर्वकरणमिष्टं, कदाचिदप्राप्तपूर्वत्वात् ॥ २ ॥" —,,

ततोऽप्युत्तरोत्तरविशोधिस्थानप्राप्त्या अनिवृत्तिस्थानं भवति । परस्परं नातिवर्तन्ते इत्यनिवृत्तयः । परस्परतुल्यवृत्तय इत्यर्थः । सम्परायाः कषायास्तदुदयो बादरो येषां ते बादरसम्परायाः । अनिवृत्तयश्च ते बादरसम्परायाश्च त इत्यर्थः । ते उपशमकाः क्षपकाश्च । तत्र नपुंसकस्त्रीवेदषट्नोकषायादिक्रमान्मोहप्रकृतीरुपशमकः शमयति—

"अणदंसणपुंसगइत्थिवेयछक्कं च पुरसवेयं च ।
दो दो एगंतरिए, सरिसे सरिसं उवसमेइ ॥ १ ॥"—आर्या
—आवश्यकनिर्युक्तौ गा० ११६

क्षपको निद्रानिद्रादिउदय(यादित्रय?)क्षयात् त्रयोदशनामकर्मक्षयाच्चाप्रत्याख्यानावरणादि कषायाष्टकनपुंसकस्त्रीवेदक्रमाच्च क्षपयति । उक्तं च—

"अथ स क्षपयति निद्रा-निद्रादित्रयमशेषतस्तत्र ।
नरकगमनानुपूर्वी, नरकगतिं चापि कात्स्न्येन ॥ १ ॥—आर्या
सूक्ष्मस्थावरसाधा-रणातपोद्योतनामकर्माणि ।
तिर्यग्गतिनाम तथा, तिर्यग्गत्यानुपूर्व्यौ[२] च ॥ २ ॥ —,,
चतुरेकद्वित्रीन्द्रिय-नामानि तथैव नाशमुपयान्ति ।
तिर्यग्गतियोग्यास्ताः, प्रकृतय एकादश प्रोक्ताः ॥ ३ ॥ —,,
अष्टौ ततः कषायान्, पण्डकवेदं ततस्ततः स्त्रीत्वम् ।
क्षपयति[३] पुंवेदे सङ्-क्रमय्य षण्णोकषायांश्च ॥ ४ ॥ —,,
पुंस्त्वं क्रोधे क्रोधं, माने मानं तथैव मायायाम् ।
मायां च तथा लोभे, स क्षपयति सङ्क्रमय्य ततः ॥ ५ ॥—,,

---

१ छाया—

अनदर्शनपुंसकस्त्रीवेदषट्कं च पुरुषवेदं च ।
द्वौ द्वौ एकान्तरितौ सदृशे सदृशं उपशामयति ॥

२ 'पूर्व्यौ च' इति ग-पाठः, 'पूर्वी च' इति च-पाठः । ३ 'पुंवेदो' इति ङ-पाठः ।

लोभस्य यावद् बादरप्रकृतीर्वेदयति तावदनिवृत्तिबादरसम्परायसंयताः। ततः सूक्ष्मप्रकृतिवेदनाल्लोभकषायस्य सूक्ष्मसम्परायसंयतः उपशमकः सञ्ज्वलनलोभमुपशमयति क्षपकः क्षपयति। यथोक्तम्—

"अथ सूक्ष्मसम्पराय–स्थानं प्राप्नोति बादरे लोभे।
क्षीणे सूक्ष्मे लोभे–कषायशेषे विशुद्धात्मा॥ १॥
यत् सम्परायमुपजन–यन्ति स्वयमपि च सम्परायन्ति।
व्यासङ्गहेतवस्ते–न कषायाः सम्परायाख्याः॥ २॥
सम्यग्भावपरायण–हेतुत्वाद् वाऽपि सम्परायास्ते।
प्रकृतिविशेषाच्च पुन–र्लोभकषायस्य सूक्ष्मत्वम्॥ ३॥
स ततो विशुद्धियोगे, नयति स्थानान्तरं व्रजंस्तमपि।
क्षपयन् गच्छति यावत्, क्षीणकषायत्वमाप्नोति॥ ४॥"

ततोऽष्टाविंशतिविधमोहनीयोपशमादुपशान्तकषायवीतरागच्छद्मस्थः वीतो–गतो (रागो यस्मादिति वीतरागः) छद्म–आवरणं तत्र स्थितः छद्मस्थः मोहनीयस्य कृत्स्नक्षयात् स क्षीणकषायवीतरागच्छद्मस्थः ततः क्षीणकषायो धर्मशुक्लाद्यद्वयध्यानविशेषाद् यथाख्यातसंयमविशुद्ध्याऽवशेषाणि[1] कर्माणि क्षपयति। तत्र निद्राप्रचले द्विचरमसमये क्षपयति। ततोऽस्य चरमसमये आवरणद्वयान्तरायक्षयात् केवलज्ञानदर्शनमुत्पद्यत इति। धर्मध्यानानुप्रवेशपरिकर्माणि च भावनादेशकालासनादीनि। तत्र चतस्रो भावना ज्ञान-दर्शन-चारित्र-वैराग्याख्याः। ज्ञाने नित्याभ्यासान्मनसः तत्रैव प्रणिधानमवगतगुणसारश्च निश्चलमतिरनायासेनैव धर्म्यं ध्यायति। तथा विगतशङ्कादिशल्यः प्रशम-संवेग-निर्वेदा-ऽनुकम्पा-ऽऽस्तिक्य-स्थैर्य-प्रभावना-यतना-सेवन-भक्तियुक्तः असम्मूढचेता दर्शनभावनया विमलीकृतमतिरस्खलितमेव[2] धर्मं ध्यायति। तथा चरणभावनाधिष्ठितः कर्माण्यपराणि नादत्ते, पुरातननिर्जरणं शुभानि वा सञ्चिनुते। ततश्चायत्नेनैव धर्मध्यायी भवति। तथा जगत्कायस्वभावालोचनात् सुविदितजगत्स्वभावो निःसङ्गो निर्भयो विरागो वैराग्ये भावनावष्टब्धचेताः लीलयैव धर्मध्यायी भवति। देशोऽपि निष्कण्टको यः। कण्टकाः स्त्री-पशु-पण्डकाः। कालोऽपि यस्मिन्नेव काले मनसः समाधिरुत्पद्यते स एव ध्यानकालः। यथोक्तम्—

"णत्थि[3] कालो अकालो वा झायमाणस्स भिक्खुणो।"

आसनं–कायावस्थाविशेषः। य एवाबाधकोऽभ्यस्तो जितः स एव कायविकल्प आसनम् यथोक्तम्—

---

१ 'च शेषाणि' इति च–पाठः। २ 'विमलकृत' इति च–पाठः।

३ छाया—

नास्ति कालोऽकालो वा ध्यायमानस्य भिक्षोः।

"कालः समाधिर्ध्यानस्य, कायावस्था जितासनम् ।
शुचिर्निष्कण्टको देश–स्ते च स्त्री-पशु-पण्डकाः ॥ १ ॥"

आलम्बनान्यपि वाचना-प्रच्छना-परिवर्तन-चिन्तनानि सद्धर्मावश्यकादीनि च सामायिकादीनि । एभिरालम्बनैर्धर्मध्यानं समारोहति ध्यानप्रतिपत्तिक्रमश्च मनोयोगनिग्रहादिः । भवकाले केवलिनः शेषस्य ध्यातुर्यथा समाध्यपेक्षमिति । लेश्यास्तु पीत-पद्म-शुक्लाख्यास्तीव्र-मन्दादिभेदाः । निसर्गा-ऽधिगमाभ्यामशेषजीवादिपदार्थश्रद्धानं जिनसाधुगुणोत्कीर्तनं प्रशंसा-विनय-दानानि च धर्मध्यानलिङ्गम् ।

"तस्मादथाप्रमत्त–स्थानात् स विशोधिमुत्तमं प्राप्य ।
स्थानान्तराण्यनेका–न्यारोहति पूर्वविधिनैव ॥ १ ॥—आर्या
देशे ततो विविक्ते, समे शुचौ जन्तुविरहिते कल्पे ।
ऋज्वायम्य स देहं, बद्ध्वा पल्यङ्कमचलाङ्गः ॥ २ ॥—,,
वीरासनादि चासन–मथ समपादादि वाचलं स्थानम् ।
यद् वाऽधिष्ठाय यतिः, शयनं चोत्तानशयनादि ॥ ३ ॥—,,
ज्ञेयमखिलं विविदिष–न्नधितिष्ठासंश्च मोक्षविधिमखिलम् ।
सन्धाय स्मृतिमात्मनि, किञ्चिदुपावर्त्य दृष्टिं स्वाम् ॥ ४ ॥—,,
विषयेभ्य इन्द्रियाणि, प्रत्यवहृत्य च मनस्तथा तेभ्यः ।
धारयति मनः स्वात्मनि, योगं प्रणिधाय मोक्षाय ॥ ५ ॥—,,
ध्यानं ततः सधर्म्यं, भिक्षुर्विचिनोति मोहनाशाय ।
उत्तमसंहननबलः, क्षपकश्रेणीमुपयियासन् ॥ ६ ॥ —,,
तल्लक्षणान्युपशमा–र्जवमार्दवलाघवानि दृष्टानि ।
उपदेशाज्ञासूत्रनि–सर्गास्तद्रुचय इष्यन्ते ॥ ७ ॥ —,,
तत्प्रश्नवाचनानु–प्रेक्षापरिवर्तनावलम्बनकः ।
तदनुप्रेक्षाः संसा–रैक्यानित्याशरणचिन्ताः ॥ ८ ॥ —,,
एकाग्रेण मनः स्वं, निरुध्य भावाञ्जिनाज्ञया ग्राह्यान् ।
विचिनोति यथातत्त्वं, तथैव च शुभाशुभापायान् ॥ ९ ॥ —,,
संस्थानानि च सर्व–द्रव्याणां कर्मफलविपाकांश्च ।
प्रवचनसम्भिन्नमति–र्विशुद्धलेश्याः प्रविचिनोति ॥ १० ॥—,,

१ 'मनःसमाधि' इति च-पाठः । २ 'पेक्षमेति' इति च-पाठः । ३ 'तद्बाधि' इति च-पाठः । ४ 'स्तत्र' इति च-पाठः । ५ 'द्रचय' इति च-पाठः ।

क्षपयति तेन ध्याने—न ततोऽनन्तानुबन्धिनश्चतुरः ।
मिथ्यात्वं संमिश्रं, सम्यक्त्वं च क्रमेण ततः ॥ ११ ॥—आर्या
क्षीयन्ते हि कषायाः, प्रथमास्त्रिविधोऽपि दृष्टिमोहश्च ।
देशयतायतसम्यग्—दृगप्रमत्तप्रमत्तेषु ॥ १२ ॥"— ,,

एवं पूर्वोक्तेन क्रमेण क्षपयन् कर्मप्रकृतीरुपशान्तकषायस्थानप्राप्त उपशान्तकषायः क्षीणकषायश्च भवतीति ॥ ३८ ॥

**उपशान्तक्षीणकषाययोश्चे**त्युक्तमविशेषेण धर्मध्यानं, ततश्चैकादशाङ्गविदो द्रष्टव्यम् । एवमवस्थिते किं धर्ममेव ध्यानं तयोः ? नेत्युच्यते । किञ्चान्यदिति सम्बध्नाति । न केवलमेतयोर्धर्म्यं, शुक्लं च ध्यानमुपशान्तक्षीणकषाययोर्भवति । किं चतुर्विधमपि–पृथक्त्ववितर्कं एकत्वसविचारं सूक्ष्मक्रियमप्रतिपाति व्युपरतक्रियमनिवर्तीति ? । उच्यते–न खलु चतुष्प्रकारमपि तयोः शुक्लध्यानं भवति, किं तर्हि ?

## सूत्रम्—शुक्ले चाद्ये ॥ ९–३९ ॥

**भा०—शुक्ले चाद्ये** ध्याने पृथक्त्ववितर्कैकत्ववितर्के चोपशान्तक्षीणकषाययोर्भवतः ॥ ३९ ॥

**टी०—शुक्ले चाद्ये** चे(इ?)ति । शुक्ले ध्याने **उपशान्तक्षीणकषाययोर्भवतः** । के पुनस्ते ? पृथक्त्वैकत्ववितर्के । स्वरूपतः कीदृशे ? । उच्यते—पृथग्–अयुतकं भेदः तद्भावः पृथक्त्वम्–अनेकत्वं तेन सह गतो वितर्कः, पृथक्त्वमेव वा वितर्कः सहगतं वितर्कपुरोगं पृथक्त्ववितर्कम् । तच्च परमाणुजीवादावेकद्रव्ये उत्पादव्ययध्रौव्यादिपर्यायानेकतयाऽपि तत्त्वं तत् पृथक्त्वं पृथक्त्वेन पृथक्त्वे वा तस्य चिन्तनं वितर्कसहचरितं सविचारं च यत् तत् पृथक्त्ववितर्कं सविचारं तच्च पृथक्त्वमर्थव्यञ्जनयोगानां वक्ष्यति—" त्र्येककाययोगायोगानां ", " वितर्कः श्रुतं ", " विचारोऽर्थव्यञ्जनयोगसङ्क्रान्तिः " ( अ० ९, सू० ४३, ४६, ४७ ) । पूर्वगतभङ्गिकश्रुतानुसारेणार्थव्यञ्जनयोगान्तरप्राप्तिः–गमनं विचारः । अर्थाद् व्यञ्जनसङ्क्रान्तिः, व्यञ्जनादर्थसङ्क्रान्तिः, मनोयोगात् काययोगसङ्क्रान्तिर्वाग्योगसङ्क्रान्तिर्वा । एवं काययोगान्मनोयोगं वाग्योगं वा सङ्क्रामति । तथा वाग्योगान्मनोयोगं काययोगं वेति । यत्र सङ्क्रामति तत्रैव निरोधो ध्यानमिति । एकस्य भाव एकत्वं, एकत्वगतो वितर्क एकत्ववितर्कः । एक

१ 'कषायस्थः क्षीणकषायः क्षीण०' इति छ–पाठः । २ 'स्थानप्राप्त उपशमकषायः' इति च–पाठः । ३ 'तर्कं सवि०' इति ङ–पाठः । ४ 'उप०' इति ग–पाठः । ५ 'यत्र' इति च–पाठः ।

एव योगत्रयाणामन्यतमस्तथा अर्थो व्यञ्जनं चैकमेव पर्यायान्तरानर्पितमेकपर्यायचिन्तनमुत्पाद-व्ययध्रौव्यादिपर्यायाणामेकस्मिन् पर्याये निवातशरणप्रतिष्ठितप्रदीपवन्निष्प्रकम्पं, पूर्वगतश्रुतानु-सारि चेतो निर्विचारमर्थव्यञ्जनयोगान्तरेषु तदेकत्ववितर्कमविचारम् । आह च—

" क्षीणकषायस्थानं, तत् प्राप्य ततो विशुद्धलेश्यः सन् ।
एकत्ववितर्कावीचारं ध्यानं ततोऽध्येति ॥ १ ॥— आर्या
एकार्थाश्रयमिष्टं, योगेन च केनचित् तदेकेन ।
ध्यानं समाप्यते यत्, कालोऽल्पोऽन्तर्मुहूर्तश्च[3] ॥ २ ॥— ,,
श्रुतमुच्यते वितर्कः, पूर्वाभिहितार्थनिश्चितमतेश्च ।
ध्यानं तदिष्यते ये-न तेन सवितर्कमिष्टं तत् ॥ ३ ॥— ,,
अर्थव्यञ्जनयोगा—नां सङ्क्रान्तिरुदितो हि [4]विचारः ।
तदभावात् तद् ध्यानं, प्रोक्तमविचारमर्हद्भिः ॥ ४ ॥— ,,
व्युत्सर्गविवेकात् सं-मोहाव्ययलिङ्गमिष्यते शुक्लम् ।
न च सम्भवन्ति कार्त्स्न्ये-न तानि लिङ्गानि मोहवतः ॥ ५ ॥— ,,
व्युत्सर्गः सङ्गत्यागः देहोपधीनां विवेकः ।
प्रीत्यप्रीतिविरहितं, ध्यायंस्तदुपेक्षकः प्रसन्नं सः ॥ ६ ॥— ,,
प्राप्नोति परं ह्लादं, हिमातपाभ्यामिव [6]विमुक्तम् ।
तेन ध्यानेन यथा-ख्यातेन च संयमेन घातयति ॥ ७ ॥— ,,
शेषाणि घातिकर्मा-णि युगपदपरञ्जनानि ततः ।
कार्त्स्न्यान्मस्तकशूच्यां, यथा हतायां हतो भवति तालः ॥ — ,,
कर्माणि क्षीयन्ते, तथैव मोहे हते कार्त्स्न्यात् ॥ ८ ॥— ,,
निद्राप्रचले द्विचरम-समये तस्य क्षयं समुपयातः ।
चरमान्ते क्षीयन्ते, शेषाणि तु घातिकर्माणि ॥ ९ ॥— ,,
आवरणचरमसमये, तस्य दयाभावितात्मनो भवति ।
जीवैस्ततं जगत् प-श्यतो हि भावक्षयोपशमः ॥ १० ॥— ,,
शटितप्रायं हि तदा-ऽऽवरणं परमावधिश्च भवति तदा ।
अथ कार्त्स्न्यात् तत्पतनाद् द्वितीयसमये क्षयायैति ॥ ११ ॥— ,,

१ 'निवातव्यशरणमप्रति' इति छ-पाठः । २ 'योग्यन्तरेषु इति ङ-पाठः । ३ 'मुहूर्तः सः' इति ङ-पाठः । ४ 'वीचारः' इति ङ-पाठः । ५ यद्यपि इयं पङ्क्तिः सर्वासु प्रतिषु समस्ति तथापि अशुद्धेव सा प्रतिभाति । ६ 'विमुक्तः' इति ङ-पाठः । ७ 'समुपघातः' इति च-पाठः । ८ 'क्षयाग्राम' इति छ-पाठः । ९ 'समयोपक्षयामैति' इति च-पाठः ।

तस्य हि तस्मिन् समये, केवलमुत्पद्यते गततमस्कम् ।
ज्ञानं च दर्शनं चा-वरणद्वयसङ्क्षयाच्छुद्धम् ॥ १२ ॥— आर्या
चित्रं चित्रपटनिभं, त्रिकालसहितं ततः सलोकमिमम् ।
पश्यति युगपत् सर्वं, सालोकं सर्वभावज्ञम् ॥ १३ ॥— ,,
वीर्यं निरन्तरायं, भवत्यनन्तं तथैव तस्य तदा ।
कल्पातीतस्य महा-त्मनोऽन्तरायक्षयः कात्स्न्यात् ॥ १४ ॥—,,
स ततो वेदयमानो, विहरति चत्वारि शेषकर्माणि ।
आयुष्यस्य समाप्ति-र्यावत् स्याद् वेद्यमानस्य ॥ १५ ॥"—,,

भाष्यकारस्तु पूर्वविद इति सूत्रावयवं पृथग् विवृणोति सम्बन्धयति । एवमेते शुक्लध्याने पूर्वविदो भवतः ॥ ३९ ॥

## सूत्रम्—पूर्वविदः ॥ ९–४० ॥

**भा०—आद्ये शुक्ले ध्याने पृथक्त्ववितर्कैकत्ववितर्के पूर्वविदो भवतः ॥४०॥**

**टी०**—पूर्वविदो यौ उपशान्तक्षीणकषायौ तयोर्भवतः । सूत्रान्तरमिव व्याचष्टे, न तु परमार्थतः पृथक् सूत्रम् । पूर्वं प्रणयनात् पूर्वाणि चतुर्दश तद्विदः पूर्वविदस्ते भवन्ति नैकादशाङ्गविदः । एवमाद्यशुक्लध्यानद्वयस्य स्वामिनियमनं विहितम् ॥ ४० ॥

अथ पश्चाच्छुक्लध्यानद्वयस्य कः स्वामीति तन्निर्दिदिक्षयोवाच—

## सूत्रम्—परे केवलिनः ॥ ९–४१ ॥

**भा०—परे द्वे शुक्ले ध्याने केवलिन एव भवतः, न छद्मस्थस्य ॥ ४१ ॥**

अन्तिमशुक्लध्यानद्वयस्य स्वामिनः

**अत्राह—उक्तं भवता पूर्वे शुक्ले ध्याने परे शुक्ले ध्याने इति । तत् कानि तानीति ? अत्रोच्यते—**

**टी०**—परं च परं च परे सूत्रसन्निवेशमाश्रित्य सूक्ष्मक्रियमप्रतिपाति व्युपरतक्रियं चानिवर्ति ग्रहीतव्यं, ते च **केवलिन एव** त्रयोदशचतुर्दशगुणस्थानक्रमेणैव **भवतः । छद्मस्थस्य** तु **नैते** जातुचिद् भवत इति तत्र सूक्ष्मक्रियमप्रतिपातीति । सूक्ष्मा क्रिया यत्र तत् सूक्ष्मक्रियम् । तच्च योगनिरोधकाले भवति । वेद्य-नाम-गोत्रकर्मणां भवधारणायुष्कादधिकानां समुद्घातसामर्थ्यादचिन्त्यैश्वर्यशक्तियोगादायुष्कसमीकृतानां मनो-वाक्-काययोगपरिणतस्यौदारिकशरीरत्रिभागोनस्थस्य केवलिनः संज्ञिपञ्चेन्द्रियपर्याप्तकमनोऽसङ्ख्येयगुणकहीनं सूक्ष्मयोगित्वमप्रतिपात्यच्युतस्वभावमा व्युपरतक्रियानिवृत्तिध्यानावाप्तेः । उक्तं च—

---

१ 'भावज्ञः' इति ङ–पाठः । २ 'शुभध्याने' इति ग–पाठः ।

"अप्रतिपाति ध्यायन्, कश्चित् सूक्ष्मक्रिय [1]विहृत्यन्ते ।
आयुःसमीक्रियाऽर्थं, त्रयस्य गच्छेत् समुद्घातम् ॥ १ ॥—आर्या
आर्द्राम्बराशुशोषव–दात्मविसारणविशुष्कसमकर्मा ।
समयाष्टकेन देहे, स्थित्वा योगात् क्रमाद् द्वन्द्वे ॥ २ ॥—"

तथाऽन्य आह—

आयुषि समाप्यमाने, शेषाणां कर्मणां यदि समाप्तिः ।
न स्यात् स्थितिवैषम्याद्, गच्छति स ततः समुद्घातम् ॥ १ ॥—आर्या
स्थित्या च बन्धनेन, च समीक्रियार्थं हि कर्मणां तेषाम् ।
अन्तर्मुहूर्तशेषे, तदायुषि समुज्जिघांसति सः ॥ २ ॥— ,,
आर्द्रं विरल्तितं सद्, वस्त्रं मङ्क्ष्वेव ननु विनिर्वाति ।
संवेष्टितं तु न तथा, तथा हि कर्मापि मूर्तत्वात् ॥ ३ ॥— ,,
स्नेहक्षयसाम्यात् (स्थितिबन्धनहेतुर्हि) स्नेहः स च हीयते समुद्घातात् ।
क्षीणस्नेहं [3]शटति हि भवति तदल्पस्थिति च शेषम् ॥ ४ ॥—,,
आयुष्कस्यापि विरल्तितस्य, [4]न ह्रास्यते स्थितिः कस्मात् ।
इति वा चोद्यं चरम–शरीरोऽनुपक्रमायुर्यत् कङ्कटुकवत् ॥ ५ ॥—,,
दण्डकपाटरुचक–क्रिया जगत्पूरणं चतुःसमयम् ।
क्रमशो निवृत्तिरपि च त–[5]थैव प्रोक्ता चतुःसमया ॥ ६ ॥ —,,
विकसनसङ्कोचनधर्मत्वाज्जीवस्य तत् तथा सिद्धम् ।
यच्चाप्यनन्तवीर्यं, तस्य ज्ञानं च गततिमिरम् ॥ ७ ॥ —,,
शेषायाः शेषायाः, समये संहृत्य सङ्ख्येयान् ।
भागान् स्थितेरनन्तान्, भागान् शुभानुभावस्य ॥ ८ ॥ —,,
स ततो योगनिरोधं, करोति लेश्यानिरोधमपि काङ्क्षन् ।
समसमयस्थितिं बन्धं, योगनिमित्तं स हि रुरुत्सन् ॥ ९ ॥—,,
समये समये कर्मा-दाने सति सन्ततेर्न मोक्षः स्यात् ।
यद्यपि हि न मुच्यन्ते, स्थितिक्षयात् पूर्वकर्माणि ॥ १० ॥ —,,
[6]नोकर्माणि हि वीर्यं, योगद्रव्येण भवति जीवस्य ।
तस्यावस्थाने ननु, सिद्धः समयस्थितिर्बन्धः ॥ ११ ॥ —,,

---

१ 'विकृत्यन्ते' इति च–पाठः । २ ग–च–छ–प्रतिष्वपि चिह्निताक्षराण्यधिकानि सन्ति । ३ 'वितरति' इति च–पाठः । ४ 'तद् भास्यते' इति ग–पाठः । ५ 'प्रोक्ताश्चतुःसमये' इति ङ–पाठः । ६ 'नोकर्मणा हि' इति ङ–पाठः ।

बादरतत्वात् पूर्वं, वाङ्मनसे बादरे स निरुणद्धि क्रमेणैव ।
आलम्बनाय करणं, हि तदिष्टं तत्र [1]वीर्यवतः ॥ १२ ॥ —आर्या
सत्यप्यनन्तवीर्य–त्वे बादरतनुमपि निरुणद्धि ततः ।
सूक्ष्मेण काययोगेना(न?) न निरुध्यते हि सूक्ष्मो योगः ॥ १३ ॥ —,,
सति बादरे योगे, न हि धावन् वेपथुं वारयति ।
नाशयति काययोगं, स्थूलं सोऽपूर्वफड्डकीकृत्य ।
शेषस्य काययोग–स्य तथा कृतीश्च स करोति ॥ १४ (?) ॥ —,,
सूक्ष्मेण काययोगे–न ततो निरुणद्धि सूक्ष्मवाङ्मनसे ।
भवति ततोऽसौ सूक्ष्म–क्रियस्तदाकृतिगतयोगः ॥ १५ ॥ —,,
तमपि स योगं सूक्ष्मं, निरुरुत्सन् सर्वपर्य[2]यानुगतम् ।
ध्यानं सूक्ष्मक्रिय–मप्रतिपात्युपयाति वितमस्कम् ॥ १६ ॥ —,,
ध्याने दृढार्पिते पर–मात्मनि ननु निष्क्रियो भवति कायः ।
प्राणापातनिमेषो–न्मेषवियुक्तो मृतस्येव ॥ १७ ॥ —,,
ध्यानार्पितोपयोग–स्यापि न वाङ्मनसक्रि[3]ये यस्मात् ।
अन्तर्वर्तित्वादुप–रमतस्तेन तयोर्ध्यानेन निरोधनं नेष्टम् ॥ १८ ॥
सततं तेन ध्याने–न [4]निरुद्धे सूक्ष्मकाययोगेऽपि ।
निष्क्रियदेशो भवति, स्थितोऽपि देहे [5]विगतलेश्यः ॥ १९ ॥ —आर्या

तुर्य[6]ध्याने

योगाभावात् समयस्थितिना(नोऽ)पि न कर्मणो भवति बन्धः ।
ध्यानार्पणसंहारात्, किञ्चिच्च ससंहतावयवाः ॥ २० ॥ —,,
लेश्याक्रियानिरोधो, योगनिरोधश्च गुणनिरोधेन ।
इत्युक्तो विज्ञेयो, बन्धनिरोधश्च हि तथैव ॥ २१ ॥" —,,

त्रसबादरपर्याप्तादेयशुभगकीर्तिमनुजना[6]म्नि पञ्चेन्द्रियतामन्यतरच्च वेद्यम् उच्चैस्तथा गोत्रम् । मनुजायुष्कं च स एकादशं वेदयति कर्मणां प्रकृ[7]तीः वेदयति तु तीर्थकरो द्वादशसहतीर्थकृत्त्वेन सततो देहत्रयमोक्षार्थमनिवर्ति सर्वगतमुपयाति समुच्छिन्नक्रियमतमस्कं परं ध्यानं व्युपरतक्रियमनिवर्तीत्यर्थः । [8]तद्धि तावन्निवर्तते यावन्न मुक्तः ॥ ४१ ॥

१ 'वीर्यत्वे' इति ङ–पाठः । २ 'पदानुगतं' इति ङ–पाठः । ३ 'क्रिया' इति ङ–पाठः । ४ 'निरुद्धं' इति ङ–पाठः । ५ 'वयवलेश्याः' इति ग–पाठः । ६ 'नामनि' इति ग–पाठः । ७ 'प्रकृतयः' इति ङ–पाठः । ८ 'क्रिययातमस्कं' इति ङ–पाठः । ९ 'गच्छे' इत्यधिको ग–पाठः ।

अत्राह—उक्तमित्यादिसम्बन्धः । शुक्ले चाद्ये द्वे पूर्वविदः इत्युक्तं ( अ० ९, सू० ३९, ४० ), परे द्वे केवलिन इति चाभिहितं ( अ० ९, सू० ४१ )। तत् कानि तानीति अजानानेन प्रश्ने कृते अत्रोच्यते इत्याह—

शुक्लध्यानस्य चातुर्विध्यम्

**सूत्रम्—पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवर्तीनि ॥ ९–४२ ॥**

**भा०—पृथक्त्ववितर्कम्, एकत्ववितर्कं, सूक्ष्मक्रियमप्रतिपाति, व्युपरतक्रियानिवर्तीति चतुर्विधं शुक्लध्यानम् ॥ ४२ ॥**

**टी०—पृथक्त्ववितर्कमि**त्यादिना भाष्येण नामग्राहं पठति चतुरोऽपि भेदान् ॥४२॥

एते चोक्तलक्षणा भेदाः शुक्लध्यानमित्थं चतुर्विधमिति सस्वामिकमुक्तम् । तस्याधुना पूर्वोक्तस्वामिन एव विशेष्य कथ्यन्ते—

**सूत्रम्—तत् त्र्येककाययोगायोगानाम् ॥ ९–४३ ॥**

**भा०—तदेव चतुर्विधं शुक्लध्यानं त्रियोगस्यान्यतमयोगस्य काययोगस्यायोगस्य च यथासङ्ख्यं भवति । तत्र त्रियोगानां पृथक्त्ववितर्कं, एकान्यतमकयोगानामेकत्ववितर्कं, काययोगानां सूक्ष्मक्रियमप्रतिपाति, अयोगानां व्युपरतक्रियानिवर्तीति ॥ ४२ ॥**

**टी०—तदेतच्चतुर्विधं शुक्लध्यानं** प्रथमद्वितीयो(?)त्तमसंहननवतो भवति । तत्राद्यं पृथक्त्ववितर्कं **त्रियोगस्य** भवति, मनो-वाक्-काययोगव्यापारवत इत्यर्थः । **एकान्यतमयोगानामिति** । अन्यतमैकयोगानामेकत्ववितर्कं एकोऽन्यतमः कायादीनां योगो यस्य ध्यायिनो व्याप्रियते, कदाचिन्मनोयोगः कदाचिद् वाग्योगः कदाचित् काययोग इति । **काययोगानामिति** काययोगभाजामेव **सूक्ष्मक्रियमप्रतिपाति** शुक्लध्यानमिति । निरुद्धयोगद्वयावस्थानां कायव्यापारवतां **सूक्ष्मक्रियं** भवति, न च प्रतिपतति । **अयोगानामिति** शैलेश्यवस्थानां ह्रस्वाक्षरपञ्चकोच्चारणसमकालानां मनो-वाक्-काययोगत्रयरहितानां **व्युपरतक्रियमनिवर्ति** ध्यानं भवति । उक्तं च—

"यदर्थव्यञ्जने काय-वचसी च पृथक्त्वतः ।
मनः सङ्क्रमयत्यात्मा, स विचारोऽभिधीयते ॥ १ ॥—अनु०
सङ्क्रान्तिरर्थादर्थं यद्, व्यञ्जनाद् व्यञ्जनं तथा ।
योगाच्च योगमित्येष, विचार इति वा मतः ॥ २ ॥ —,,

१ 'बाद्ये' इति ङ-पाठः । २–३ 'निवृत्ती' इति घ-पाठः । ४ 'वचसा' इति ङ-पाठः ।

अर्थादि च पृथक्त्वेन, यद् वितर्कयतीव हि ।
ध्यानमुक्तं समासेन, तत् पृथक्त्वविचारवत् ॥ ३ ॥ —अनु०
अविकम्प्यमनस्त्वेन, योगसङ्क्रान्तिनिःस्पृहम् ।
तदेकत्ववितर्काख्यं, श्रुतज्ञानोपयोगवत् ॥ ४ ॥ —,,
सूक्ष्मकायक्रिया-रुद्धसूक्ष्मवाङ्मनसक्रियः ।
यद् ध्यायति तदप्युक्तं, सूक्ष्ममप्रतिपाति च ॥ ५ ॥ —,,
कायिकी च यदेपाऽपि, सूक्ष्मोपरमति क्रिया ।
अनिवर्ति तदप्युक्तं, ध्यानं व्युपरतक्रियम् ॥ ६ ॥" ॥ ४२ ॥—,,

## सूत्रम्—एकाश्रये सवितर्के पूर्वे ॥ ९-४४ ॥

**भा०—एकद्रव्याश्रये सवितर्के पूर्वे ध्याने प्रथमद्वितीये । तत्र सविचारं प्रथमं, अविचारं द्वितीयं, अविचारं सवितर्कं द्वितीयं ध्यानं भवति ॥ ४४ ॥**

टी०— एक आश्रय-आलम्बनं ययोस्ते एकाश्रये एकद्रव्याश्रये इति पूर्वविदारभ्ये मतिगर्भश्रुतप्रधानव्यापाराच्चैकाश्रयतापरमाणुद्रव्यमेकमालम्ब्यात्मादिद्रव्यं वा श्रुतानुसारेण निरुद्धचेतसः शुक्लध्यानमिति " वितर्कः श्रुतम् " वक्ष्यति (अ० ९, सू० ४५) इति। सह वितर्केण **सवितर्के**, पूर्वगतश्रुतानुसारिणीत्यर्थः । पूर्वं च पूर्वं च **पूर्वे** ध्याने । एतदेव निश्चिनोति— **प्रथमद्वितीये** इति पृथक्त्ववितर्कमेकत्ववितर्कं च । **तत्र**–तयोर्यत् प्रथमम्–आद्यं पृथक्त्ववितर्कं तत् सविचारं सह विचारेण सविचारं, सह सङ्क्रान्त्येति यावत् । वक्ष्यति (अ० ९, सू० ४६)– "विचारोऽर्थव्यञ्जनयोगसङ्क्रान्तिः" । कथं पुनरनुपात्तं सूत्रे सविचारमिति गम्यते ? । **अविचारं द्वितीयमिति** वचनादर्थलभ्यं **प्रथमं सविचारमिति** ।

अविचारं द्वितीयम् । अविद्यमानविचारं अविचारं, अर्थव्यञ्जनयोगसङ्क्रान्तिरहितमित्यर्थः । द्वितीयमिति सूत्रक्रमप्रामाण्यादेकत्ववितर्कमविचारं भवति ध्यानमिति ॥ ४४ ॥

**भा०—अत्राह—वितर्कविचारयोः कः प्रतिविशेष इति ? । अत्रोच्यते—**

**टी०—अत्राहेत्यादि** वितर्कविचारयोर्विशेषमजानानः स्वरूपमवगच्छन् परः पृच्छति—**कः प्रतिविशेष इति** । प्रतिशब्दस्तत्त्वाख्यायां वर्तते । यथा–शोभनश्चैत्रः प्रतिमातरं एवं प्रतिविशेषः स्वरूपमितरेतरव्यावृत्तं तत्त्वं वितर्कविचारयोः कीदृगिति तत्त्वमाख्यायताम् । **अत्रोच्यत इत्याह—**

'प्रति'शब्दस्य अर्थनानात्वम्

---

१ 'कम्पमन' इति ङ-पाठः । २ 'दारम्भे' इति ङ-पाठः । ३ 'देकत्वविचारं' इति ङ-पाठः ।

## सूत्रम्—वितर्कः श्रुतम् ॥ ९–४५ ॥

**भा०—यथोक्तं श्रुतज्ञानं वितर्को भवति ॥ ४५ ॥**

**टी०**—वितर्को-मतिज्ञानं विकल्पः । वितर्क्यते-येनालोच्यते पदार्थः स वितर्कः तदनुगतं श्रुतं वितर्कः तद्भेदाद् विगतं तर्कं वा वितर्कं, संशयविपर्ययोपेतं श्रुतज्ञानमित्यर्थः । इदमेव सत्यमित्यविचलितस्वभावम् । यथोक्तमिति पूर्वगतमेव, नेतरत् । श्रुतज्ञानमाप्तवचनं वितर्क उच्यते इति ॥ ४५ ॥

सम्प्रति विचारस्वरूपनिरूपणायाह—

## सूत्रम्—विचारोऽर्थव्यञ्जनयोगसङ्क्रान्तिः ॥ ९-४६ ॥

**भा०—अर्थव्यञ्जनयोगसङ्क्रान्तिर्विचार इति । एतदभ्यन्तरं तपः संवरत्वादभिनवकर्मोपचयप्रतिषेधकं निर्जरणफलत्वात् कर्मनिर्जरकम् । अभिनवकर्मोपचयप्रतिषेधकत्वात् पूर्वोपचितकर्मनिर्जरकत्वाच्च निर्वाणप्रापकमिति ॥ ४६ ॥**

**टी०**—अर्थव्यञ्जनयोर्योगेषु च सङ्क्रमणं सङ्क्रान्तिः । अर्थः-परमाण्वादिः, व्यञ्जनं तस्य वाचकः शब्दः, योगा-मनोवाक्कायास्तेषु सङ्क्रमणं सङ्क्रान्तिरेकद्रव्ये अर्थस्वरूपा(त्) व्यञ्जनं व्यञ्जनस्वरूपादर्थं वर्णादिकः पर्यायोऽर्थः व्यञ्जनशब्दः । एतदुक्तं भवति-प्राक्शब्दस्ततस्तत्त्वालम्बनमिदमस्य स्वरूपमयमस्य पर्यायस्ततस्तदर्थचिन्तनं साकल्येन, ततः शब्दार्थयोः स्वरूपविशेषचिन्ताप्रतिबन्धः प्रणिधानमर्थसङ्क्रान्तिः, काययोगोपयुक्तध्यानस्य वाग्योगसञ्चारः, वाग्योगोपयुक्तध्यानस्य वा मनोयोगसञ्चारः इत्येवमन्यत्रापि योज्यम् । इत्थंलक्षणो विचार इत्यस्ति वितर्कविचारयोः प्रतिविशेष इति ॥ एतदभ्यन्तरं तप इत्यादि संवरकारणं संवरप्रस्तावे ( अ० ९, सू० ३ ) इदमुक्तं "तपसा निर्जरा च" इति । संवरो निर्जरा च भवति उभयं करोति तपः । तच्च तपो बाह्यमाभ्यन्तरं च संवरकारणं **संवररूपत्वाच्च** स्थगितास्रवद्वारस्याभिनवकर्मोपचयप्रतिषेधकारि[1] नापूर्वकर्मपुद्गलप्रवेशः । कर्मनिर्जरा चेति **निर्जरणफलत्वात् कर्मनिर्जरकं** कर्म निर्जरयति, परिशाटयतीत्यर्थः । ततश्चाभिनवकर्मोपचयप्रतिषेधकारित्वात् **पूर्वोपचितकर्मनिर्जरकत्वाच्च** सकलकर्मपरिक्षयान्निर्वाणप्रापकमिति ॥ ४६ ॥

**भा०—अत्राह—उक्तं भवता ( अ० ९, सू० २–३) परीषहजयात् तपसोऽनुभावतश्च कर्मनिर्जरा भवतीति । तत् किं सर्वे सम्यग्दृष्टयः समनिर्जरा आहोस्विदस्ति कश्चित् प्रतिविशेष इति ? । अत्रोच्यते—**

**टी०**—अत्राह—उक्तं भवतेत्यादि सम्बन्धग्रन्थः । किमुक्तं तद् दर्शयति—**परीषहजयात्**, क्षुत्पिपासादयः परीषहास्तज्जयात्-सम्यगतिसहनात् । **तपो** द्वादशभेदमनशन-

---

1 'कारिता अपूर्व' इति च-पाठः ।

प्रायश्चित्तादि तदनुष्ठानात् । **अनुभावतश्च** । अनुभावो विपाकस्तस्माच्च विपाकात् कर्मणः परिशाटो निर्जरा **भवतीति** । एवमनूद्य निर्जरां सन्देहस्थानमुपन्यस्यति । यस्मादेवं तस्मात् **किं सम्यग्दृष्टयः सर्वे एव समनिर्जरास्तुल्यमेव कर्म निर्जरयन्ति आहोस्विदस्ति कश्चित् प्रतिविशेष** इति ? । विशेषो विषमनिर्जरणं, न तुल्यनिर्जरत्वमिति । आचार्योऽपि हृदि व्यवस्थाप्य विषमनिर्जरणामाह—**अत्रोच्यत** इति । यत् तत्त्वं तदाख्यायत इत्यर्थः ॥

विषमाणि निर्जरणानि

**सूत्रम्—सम्यग्दृष्टिश्रावकविरतानन्तवियोजकदर्शनमोहक्षपकोपशमकोपशान्तमोहक्षपकक्षीणमोहजिनाः[1] क्रमशोऽसङ्ख्येयगुणनिर्जराः ॥ ९–४७ ॥**

**भा०—सम्यग्दृष्टिः, श्रावकः, विरतः, अनन्तानुबन्धिवियोजकः, दर्शनमोहक्षपकः, मोहोपशमकः, उपशान्तमोहः, मोहक्षपकः, क्षीणमोहः, जिनः इत्येते दश क्रमशः असङ्ख्येयगुणनिर्जरा भवन्ति । तद्यथा—सम्यग्दृष्टेः श्रावकोऽसङ्ख्येयगुणनिर्जरः, श्रावकाद् विरतः, विरतादनन्तानुबन्धिवियोजकः, इत्येवं शेषाः ॥ ४७ ॥**

**टी०—सम्यग्दृष्टिरिति** । तत्त्वार्थश्रद्धानं सम्यग्दर्शनं तद्युक्तः सम्यग्दृष्टिः, सम्यग्दर्शनमात्रभागित्यर्थः । आचार्यप्रभृतीन् पर्युपासीनः प्रवचनसारं शृणोतीति **श्रावकः** । शृण्वंश्च सकलचरणकरणाक्षमो गृहस्थयोग्यमनुगुणशिक्षाव्रतलक्षणं धर्ममनुतिष्ठति । यथाशक्ति वा द्वादशप्रकारस्य धर्मस्यैकदेशानुष्ठाय्यपि श्रावक एव । **विरतस्तु** साधुधर्मानुष्ठायी सर्वस्मात् प्राणातिपाताद् यावज्जीवं विरतः, एवं मृषावादादिभ्योऽपि;

श्रावकस्य व्याख्या

**अनन्तः** संसारस्तदनुबन्धिनोऽनन्ताः क्रोधादयस्तान् वियोजयति क्षपयत्युपशमयति वा **अनन्तवियोजकः** । **दर्शनमोहक्षपक** इति । दर्शनमोहोऽनन्तानुबन्धिनश्चत्वारः सम्यग्-मिथ्यात्व-तदुभयानि च । अस्य सप्तविधस्य दर्शनमोहस्य क्षपकः । तथाऽस्यैवो**पशमकः** । मोहोऽष्टाविंशतिभेदः—षोडश कषायाः सम्यक्त्व-मिथ्यात्व-सम्यग्मिथ्यात्व-हास्य-रति-अरति-भय-शोक-जुगुप्सा-स्त्री-पुं-नपुंसकवेदाश्च । अस्योपशमनादु**पशान्तमोहः** । अस्यैव सकलस्य क्षपणा**न्मोहक्षपकः** । क्षपणोपशमनक्रियाविशिष्टयोर्ग्रहणम् । क्षपितनिरवशेषमोहः **क्षीणमोहः** । स चतुर्विधघातिकर्मजयनाज्जिनः—केवली । एते सम्यग्दृष्ट्यादयो जिनावसाना **दश** क्रमेण **क्रमशः**—परिपाट्या यथोपन्यस्तास्तथैवा**सङ्ख्येयगुणनिर्जरा भवन्ति,** न तु तुल्यनिर्जरा इत्यर्थः । तामेवासङ्ख्येयगुणां निर्जरां स्पष्टयति भाष्यकारः—**सम्यग्दृष्टेः श्रावकोऽसङ्ख्येयगुणनिर्जर** इत्यादिना । केवलसम्यग्दृष्टेः प्रतिपन्नाणुव्रतादि-

---

1 'जिनानां' इति ग–पाठः ।

कलापः श्रावकोऽसङ्ख्येयगुणनिर्जरो भवति यावन्ति कर्माणि निर्जरयति सम्यग्दृष्टिः सम्यग्दर्शनप्रभावात् तत्कर्मापरेणासङ्ख्येयराशिना गुणितं तद् यावद् भवति तावद् देशविरतः क्षपयति । एवं पूर्वस्मात् पूर्वस्मादुत्तरोत्तरोऽसङ्ख्येयगुणनिर्जरो भवतीति दर्शयति **श्रावकाद् विरतो विरतादनन्तानुबन्धिवियोजक इत्येवं शेषा यावज्जिनः सर्वेभ्य एवासङ्ख्येयगुणनिर्जर इति** । अस्य वैचित्र्यभाजः संवरचारित्रस्य के स्वामिन इति तन्निर्दिदिक्षयाऽऽह—

निर्ग्रन्थानां पञ्चविधत्वम्

## सूत्रम्—पुलाक-बकुश-कुशील-निर्ग्रन्थ-स्नातका निर्ग्रन्थाः ॥ ९–४८ ॥

**भा०—पुलाको बकुशः कुशीलो निर्ग्रन्थः स्नातक इत्येते पञ्च निर्ग्रन्थविशेषा भवन्ति ॥**

टी०—पुलाकादयः पञ्चान्वर्थसञ्ज्ञका निर्ग्रन्थाः स्वामिनः । तद्विवरणार्थमाह—**पुलाकः बकुशः कुशीलः निर्ग्रन्थः स्नातक इति । एते पञ्च निर्ग्रन्थविशेषा**-भेदा **भवन्ति** निर्ग्रन्थानामिति । ग्रन्थः कर्माष्टकप्रकारं मिथ्यात्वा-ऽविरति-(कषाय)दुष्प्रणिहितयोगाश्च । तज्जये प्रवृत्तानि निर्ग्रन्थानि । निर्गच्छद्ग्रन्था निर्ग्रन्थाः धर्मोपकरणादृते परित्यक्तबाह्याभ्यन्तरोपधयो निर्ग्रन्थाः । पुलाकादिस्वरूपनिरूपणायाह—

निर्ग्रन्थशब्दार्थः

**भा०—तत्र सततमप्रतिपातिनो जिनोक्तादागमान्निर्ग्रन्थपुलाकाः । नैर्ग्रन्थ्यं प्रति प्रस्थिताः शरीरोपकरणविभूषाऽनुवर्तिनः ऋद्धियशस्कामाः सातगौरवाश्रिताः अविविक्तपरिवाराः छेदशबलयुक्ता निर्ग्रन्था बकुशाः ॥**

पुलाक-बकुशयोः स्वरूपम्

टी०—**तत्र सततमित्यादि** । तत्र-तेषु पञ्चसु निर्ग्रन्थेषु पुलाकास्तावदेवंविधाः । पुलाको निःसार इति प्ररूढं लोके । पलञ्जिस्तन्दुलकणशून्या पुलाकः । एवं निर्ग्रन्थोऽपि लब्धिमुत्पन्नां तपःश्रुताभ्यां हेतुभ्यामुपजीवन् सकलसंयमगलनात् पलञ्जिरूपं निःसारमात्मानं करोति । ज्ञानदर्शनचरणानि च सारः तदपगमान्निःसारः । जिनप्रणीतादागमाद्धेतुतः, सदैवाप्रतिपातिन आगमाश्च सम्यग्दर्शनमूलज्ञानचरणे निर्वाणहेतू इत्यस्मादपरिभ्रष्टाः श्रद्दधाना ज्ञानानुसारेण क्रियाऽनुष्ठायिनो लब्धिमुपजीवन्तो निर्ग्रन्थाः पुलाका भवन्ति । उपजीवन्तश्च निःसारतामात्मनः कुर्वन्तीति ग्राह्यम् । सततमप्रमादिन इत्यपरे पठन्ति । जिनोक्ताद् वाऽऽगमाद्धेतुभूतान्मुक्तिसाधनेषु न प्रमाद्यन्ति जातुचिदिति ॥

पुलाकशब्दार्थः

व्याख्याभेदः

---

१ 'यावत् कर्म' इति च-पाठः । २ 'दिदिक्षुराह' इति च-पाठः । ३ 'पञ्चविधा' इति ग-पाठः । ४ शब्दसाम्यार्थं विलोक्यतां तत्त्वार्थराजवार्तिकं (पृ. ३५८) ।

बकुश इति शबलपर्यायः । शबलो वर्णव्यतिकरः क्वचिद् वलक्षः क्वचित् कृष्णः क्वचिद् रक्तः एक एव पटः । एवमयमपि निर्ग्रन्थः । सातिचारत्वाच्चरणपटं शबलयति विशुद्ध्यशुद्धिव्यतिकीर्णस्वभावं करोति । स च द्विधा-शरीरोपकरणभेदेन । तदाह वृत्ति(भाष्य?)कारः—**नैर्ग्रन्थ्यं प्रति प्रस्थिता** इत्यादि । निर्ग्रन्थस्य भावो नैर्ग्रन्थ्यं-अष्टाविंशतिविधमोहनीयक्षयस्तत् प्रति प्रस्थिताः-प्रवृत्तास्तदभिमुखास्तत्क्षयाकाङ्क्षिणः । शरीरम्-अङ्गोपाङ्गसङ्घातः उपकारित्वादुपकरणं वस्त्रपात्रादि तद्विषयां **विभूषाम्**-अलङ्कृतिमनुवर्तन्ते, तच्छीलाश्चेति । शरीरे तावदनागुप्तव्यतिरेकेण कर-चरण-वदनप्रक्षालनमक्षि-कर्ण-नासिकावयवेभ्यो दूषिकामलाद्यपनयनं दन्तपवनम(म्र)क्षणं केशसंस्कारं च विभूषार्थमाचरन् शारीरबकुशो भवति । उपकरणबकुशस्तु अकाल एव प्रक्षालितचोलपट्टकान्तरकल्पादिश्लक्ष्णकवासःप्रियः पात्रदण्डकाद्यपि तैलपात्रया(त्र्या) उज्ज्वलीकृत्य विभूषार्थमनुवर्तमानो बिभर्ति ऋद्धीः प्रभूतवस्त्रपात्रादिकास्ता इच्छन्ति कामयन्ते तत्कामाः यशःख्यातिगुणवन्तो विशिष्टाः साधवः इत्येवंविधः प्रवादस्तच्च यशः कामयन्त इति ऋद्धियशस्कामाः । **सातगौरवमाश्रिता** इति । सुखशीलता-सातगौरवं तदाश्रिताः । आदरवचनो गौरवशब्दः । सुखे य आदरः तदवाप्तिव्यापारप्रवणता तदाश्रिताः नातीवाहोरात्राभ्यन्तरानुष्ठेयासु क्रियास्वभ्युद्यताः । अविविक्ता इति नासंयमात् पृथग्भूता घृष्टजङ्घाः तैलादिकृतशरीरमृजाः कर्तरिकाकल्पितकेशा एवंविधः परिवारो येषां ते **अविविक्तपरिवाराः** सर्वदेशच्छेदार्हातीचारजनितशबलेन वैचित्र्येण **युक्ताः** एवंविधा **निर्ग्रन्था: बकुशसंज्ञाः** ॥

बकुशशब्दार्थः

बकुशस्य द्वैविध्यम्

शारीरबकुशस्य स्वरूपम्

उपकरणबकुशस्य स्वरूपम्

कुशीलस्वरूपनिर्धारणायाह—

**भा०—कुशीला द्विविधाः-प्रतिसेवनाकुशीलाः कषायकुशीलाश्च । तत्र प्रतिसेवनाकुशीला नैर्ग्रन्थ्यं प्रति प्रस्थिता अनियमितेन्द्रियाः कथञ्चित् किञ्चिदुत्तरगुणेषु विराधयन्तश्चरन्ति ते[1] प्रतिसेवनाकुशीलाः ॥**

कुशीलस्य द्वैविध्यं प्रतिसेवनाकुशीलस्य स्वरूपं च

**टी०—कुशीला द्विविधा** इत्यादि । अष्टादशसहस्रभेदं शीलं तदुत्तरगुणभङ्गेन केनचित् कषायोदयेन वा कुत्सितं येषां ते कुशीला द्विप्रकाराः । तत्प्रकाराख्यानायाह—**प्रतिसेवनाकुशीलाः कषायकुशीलाश्चेति** । आसेवनं-भजनं प्रतिसेवना तया कुत्सितं शीलमेषामिति प्रतिसेवनाकुशीलाः । कषायाः संज्वलनाख्यास्तदुदयात् कुत्सितं शीलमेषामिति कषायकुशीलाः ।

१ 'ते' इत्यूनो ग-पाठः ।

**तत्र**—तयोः **प्रतिसेवनाकुशीला नैर्ग्रन्थ्यं प्रति प्रस्थिता अनियमितेन्द्रिया**—इन्द्रिय-नियमशून्या रूपादिविषयेक्षणकृतादराः **कथञ्चित्**—केनचित् प्रकारेण व्याजमुपदिश्य **किञ्चिदेवोत्तरगुणेषु** पिण्डविशुद्धि-समिति-भावना-तपः-प्रतिमा-ऽभिग्रहादिषु **विराधयन्तः**—खण्डयन्तोऽतिचरन्तः सर्वज्ञाज्ञोल्लङ्घनमाचरन्ति ते **प्रतिसेवनाकुशीलाः** ॥

कषायकुशीलानाचष्टे—

**भा०—येषां तु संयतानां सतां कथञ्चित् सञ्ज्वलनकषाया उदीर्यन्ते ते कषायकुशीलाः ॥**

**टी०—येषां** त्वित्यादि । येषां **संयतानां सतां**—मूलोत्तरगुणसम्पदुपेतानामपि भवतां कथञ्चित्—केन प्रकारेण स्वल्पेनापि हेतुना कुड्यकाष्ठलोष्टविषमकाश्यपीप्रस्खलनादिना **सञ्ज्वलनकषायाः** क्रोधादयः **उदीर्यन्ते**—उदयमुपनीयन्ते, किञ्चिदेव कारणमासाद्योदयं गच्छन्ति **ते कषायकुशीलाः** ॥

सम्प्रति निर्ग्रन्थनिरूपणार्थमाह—

**भा०—ये वीतरागच्छद्मस्था ईर्यापथप्राप्तास्ते निर्ग्रन्थाः ।**

ईर्यायाः पर्यायाः **ईर्या योगः, पन्थाः संयमः, योगसंयमप्राप्ता इत्यर्थः ।**

**टी०—ये वीतरागच्छद्मस्था** इत्यादि । उपशमितक्षपितमोहजाला विगताशेषरागद्वेषमोहत्वात् एकादश—द्वादशगुणस्थानवर्तिनस्ते वीतरागच्छद्मस्थाः । छद्म—आवरणं तत्र स्थिताः । सावरणज्ञानाः छद्मस्थाः । **ईर्यापथं प्राप्ताः** अकषायत्वादुपशान्तकषायाः क्षीणकषायाश्च एकसमयावस्थायीर्यापथं कर्म बध्नन्ति । ईर्यायाः पन्था ईर्यापथः । **ईर्या** व्यापारो **योग** इति पर्यायाः । तस्य व्यापारस्य विषयः—**पन्थाः** स च **संयमः** सप्तदशप्रकारः । एनमेवार्थं स्पष्टतरमाचष्टे—**योगसंयमप्राप्ता इत्यर्थः** । योगेन—विशिष्टक्रियया विशिष्टमेव संयमं यथाख्याताख्यं प्राप्ता इति यावत् । ते निर्ग्रन्था विकीर्णमोहग्रन्थय इत्यर्थः ॥

**भा०—सयोगाः शैलेशीप्रतिपन्नाश्च केवलिनः स्नातका इति ॥ ४८ ॥**

**टी०—सयोगा** इत्यादिना स्नातकनिरूपणं करोति । योगः—कायादिचेष्टा । सह योगेन सयोगाः त्रयोदशगुणस्थानवर्तिनो निरस्तघातिकर्मचतुष्टयाः **केवलिनः स्नातकाः**, प्रक्षालितसकलघातिकर्ममलपटला इत्यर्थः । **शैलेशीप्रतिपन्नाश्चे**त्यनेनायोगकेवलिन उपात्ताः । ते च केवलिनो विहृत्य कञ्चित् कालं ततोऽकृतसमुद्घाताः समुद्घाताद् विनिवृत्ताः क्रमेण योगान् निरुन्धन्ति वा । स चोक्त एव क्रमः प्राक् । निरुद्धयोगाश्च व्युपरतक्रियानिवर्तिनो ध्यानेन शेषकर्मांशान् क्षपयन्ति । यथोक्तम्—

" ध्यानं ह्यभिसन्धानं, ध्यानेन च कर्मणो भवति मोक्षः ।
ध्यानेन ततः क्षपयति, कर्माणि स पञ्चमात्रेण ॥ १ ॥"—आर्या

पञ्च मात्रा यत्र ध्यान इति । एवंविधावस्थाः शैलेशीप्रतिपन्ना उच्यन्ते तदा चेमाः प्रकृतीः क्षपयन्ति—

" स्पर्शरसवर्णगन्धा—ऽनादेयनिर्माणदेहनामानि ।
संहननाङ्गोपाङ्गा—नि तथा संस्थाननामानि ॥ १ ॥—आर्या
नृसुरगतिप्रायोग्ये, सुरगत्युपघातमगुरुलघुता च ।
उच्छ्वासपराघाता, पर्याप्तशुभाशुभानि तथा ॥ २ ॥—,,
दुर्भगदुःस्वरमुच्चै—र्नीचैर्गोत्रस्थिरास्थिराणि तथा ।
अन्यतरवेद्यखगति, प्रत्येकशरीरमयशश्च ॥ ३ ॥—,,
प्रकृतय एता द्विचरम—समये तस्य क्षयं समुपयान्ति ।
क्षपयत्ययोगिवेद्या-श्च ततः प्रकृतीः स चरमान्ते ॥ ४ ॥—,,
तैजसशरीरबन्धो—ऽपि तस्य नामक्षयात् क्षयं याति ।
औदारिकबन्धो-ऽपि, क्षीयत आयुःक्षयात् तस्य ॥ ५ ॥—,,

एवमशेषकर्मक्षयान्मुक्तो भवति ॥ ४८ ॥

एवमेते पुलाकादयोऽभिहिताः पञ्च निर्ग्रन्थाः स्वरूपतः । अथैषां कः कस्य संयमविकल्पः श्रुतादिविकल्पो वेत्याह—

अनुगमविकल्पाष्टकम्

**सूत्रम्—संयमश्रुतप्रतिसेवनातीर्थलिङ्गलेश्योपपातस्थानविकल्पतः साध्याः ॥ ९-४९ ॥**

**टी०**—संयमादयोऽष्टौ स्थानान्ताः कृतद्वन्द्वा विकल्पशब्देन सह समस्यन्ते । संयमादीनां विकल्पाः—चरणभेदाः तैः संयमादिविकल्पैः । संयमादिविकल्पतः संयमादिकारणैर्हेतुभिः साध्याः—साधनीयाः प्रतिविशिष्टाः संयमादिरूपेण । केचित् तु विकल्पशब्दं स्थानसन्निधावेव नियुञ्जते स्थानस्य विकल्पाः संयमस्थानभेदा इति ॥

व्याख्याऽन्तरम्

**भा०—एते पुलाकादयः पञ्च निर्ग्रन्थविशेषाः एभिः संयमादिभिरनुयोगविकल्पैः साध्या भवन्ति । तद्यथा—संयमः । कः कस्मिन् संयमे भवतीति । उच्यते—पुलाक-बकुश-प्रतिसेवनाकुशीला द्वयोः संयमयोः सामयिके छेदोपस्थाप्ये च, कषायकुशीला द्वयोः परिहारविशुद्धौ सूक्ष्मसंपराये च, निर्ग्रन्थ-स्नातकौ एकस्मिन् यथाख्यातसंयमे ॥**

१ 'गमविकल्पैः' इति घ-टी-पाठः ।

**टी०**—एते पुलाकादय इत्यादि। एत इत्युक्तलक्षणाः पुलाकादयः पञ्च निर्ग्रन्थाः। एभिः संयमादिभिरष्टाभिरनुगमविकल्पैरनुगमनम्—अनुसरणमनुगमोऽनुयोगद्वाराण्यर्थार्पणमुखानि तद्विकल्पैः—तद्भेदैः साध्या भवन्ति। तद्यथेत्यादिना। तान् संयमादिविकल्पानुपन्यस्यति। संयम इति प्रथमोऽनुगमविकल्पः। पुलाकादीनां पञ्चानां निर्ग्रन्थानां कः कस्मिन् संयमे सामायिकादौ भवति—वर्तत इत्यङ्गप्रश्नः। उच्यते—यो यस्मिन् संयमादौ भवति स तथा भण्यते। पुलाक-बकुश-प्रतिसेवनाकुशीलास्त्रयो निर्ग्रन्थाः संयमद्वये वर्तन्ते सामयिकसंयमे छेदोपस्थाप्यसंयमे च। तत्र पुलाकः पञ्चभेदः ज्ञान-दर्शन-चरण-लिङ्ग-सूक्ष्माख्यः। स्खलितादिभिर्ज्ञानपुलाकः[1]। कुदृष्टिसंस्तवादिभिर्दर्शनपुलाकः। मूलोत्तरगुणप्रतिसेवनातश्चरणपुलाकः। यथोक्तलिङ्गाधिकरणाल्लिङ्गपुलाकः। किञ्चित्प्रमादात् सूक्ष्मपुलाकः। एष पञ्चप्रकारोऽपि संयमद्वये वर्तते। बकुशोऽपि आभोगा-ऽनाभोग[2]-संवृता-ऽसंवृत-सूक्ष्मबकुशभेदात् पञ्चप्रकारः। तत्र सञ्चिन्त्यकारी आभोगबकुशः। सहसाकारी अनाभोगबकुशः। प्रच्छन्नकारी संवृतबकुशः। प्रकटकारी असंवृतबकुशः। किञ्चित्प्रमादी सूक्ष्मबकुशः। प्रतिसेवनाकुशीलोऽपि ज्ञान-दर्शन-चरण-लिङ्ग-सूक्ष्मभेदेन पञ्चप्रकारः। ज्ञानाद्यतिचारप्रतिसेवनादिति। प्रतिगता सेवना प्रतिसेवना। क्रियायोगात्यये सत्युपसर्गसञ्ज्ञाभावात् षत्वाभावोऽतिसिक्तवत्। अन्ये तु प्रतिषेवणामेवेच्छन्ति। कषायकुशीलाः परिहारविशुद्धिसंयमे सूक्ष्मसम्परायसंयमे च द्वयोरेव दर्शिता भाष्यकारेण। अपरे तु ब्रुवते—"कषायकुशीलाः सामायिकादिषु चतुर्षु संयमेषु यथाख्यातसंयमरहितेषु वर्तन्ते"। यथाऽऽह—

पुलाकस्य पञ्चविधता

बकुशादेः पाञ्चविध्यम्

मतान्तरम्

"आद्यचारित्रयोराद्या—स्त्रय एकश्चतुर्ष्वपि।
निर्ग्रन्थ-स्नातकौ नित्यं, यथाख्यातचरित्रिणौ ॥ १ ॥"—अनु०

प्रतिसेवनाकुशीलवत् कषायकुशीलोऽपि पञ्चभेद एव। निर्ग्रन्थः स्नातकश्च एकस्मिन्नेव यथाख्यातसंयमे वर्तेते। उपशान्तक्षीणमोहा निर्ग्रन्थाः। स्नातकाः सयोगायोगकेवलिनः। निर्ग्रन्थोऽपि पञ्चभेद एव, प्रथमसमया-ऽप्रथमसमय-चरमसमया-ऽचरमसमय-सूक्ष्मभेदतः। स्नातकोऽपि पञ्चप्रकारः—अच्छविः, अशबलः, अकर्मांशः, अपरिश्रावी, संशुद्धज्ञानदर्शनधरश्चेति। छविः—शरीरं तदभावात् काययोगनिरोधे सति अच्छविर्भवति। निरतिचारत्वादशबलः। क्षपितकर्मत्वादकर्मांशः। निष्क्रियत्वात् सकलयोगनिरोधे त्वपरिश्रावी। ज्ञानान्तरेणासम्पृक्तत्वात् संशुद्धज्ञानदर्शनधर इति ॥

---

१ 'स्खलनादिभिः' इति ङ—पाठः। २ 'आभिकानाभोग' इति ग—पाठः।

श्रुतं कियत् कस्येत्याह—

**भा०—श्रुतम् । पुलाक-बकुश-प्रतिसेवनाकुशीला उत्कृष्टेनाभिन्नाक्षरदश-पूर्वधराः । कषायकुशील-निर्ग्रन्थौ चतुर्दशपूर्वधरौ । जघन्येन पुलाकस्य श्रुतमाचारवस्तु । बकुश-कुशील-निर्ग्रन्थानां श्रुतमष्टौ प्रवचनमातरः । श्रुतापगतः केवली स्नातक इति ॥**

**टी०—पुलाक–बकुश–प्रतिसेवनाकुशीला** उत्कर्षेण **अभिन्नाक्षराणि दश पूर्वाणि** धारयन्ति । अभिन्नम्-अन्यूनमेकेनाप्यक्षरेणान्यूनानि दश पूर्वाणीत्यर्थः । **कषायकुशीलो निर्ग्रन्थश्च चतुर्दशपूर्वधर** उत्कर्षतः । **जघन्येन पुलाकस्य** नवमपूर्वान्तःपाति तृतीयमा**चारवस्तु** यावच्छ्रुतम् । **बकुश-कुशील-निर्ग्रन्थानामष्टौ प्रवचनमातरः ।** श्रुतरहितः[1] **केवलीति** । आगमस्त्वन्यथा व्यवस्थितः[2]—"पुलाए[3] णं भंते केवतियं सुयं अहिज्जि(ज्जे? )ज्जा ? गोयमा ? जण्हणेणं णवमस्स पुव्वस्स तत्तियं आयारवत्थुं, उक्कोसेणं नव पुव्वाइं संपुण्णाइं, बउसपडिसेवणाकुसीला जहण्णेणं अट्ठ-पवयणमायाओ, उक्कोसेणं चोद्दस[4] पुव्वाइं अहिज्जिज्जा कसायकुशीलनिग्गंथा जहण्णेणं अट्ठ-पवयणमायाओ उक्कोसेणं चोद्दस पुव्वाइं अहिज्जिज्जा ॥"

आगमे मतभेदः

सम्प्रति प्रतिसेवनामाश्रित्योच्यते—

**भा०—प्रतिसेवना पञ्चानां मूलगुणानां रात्रिभोजनविरतिषष्ठानां पराभियोगाद् बलात्कारेणान्यतमं प्रतिसेवमानः पुलाको भवति । मैथुनमित्येके ॥**

**टी०—प्रतिसेवना पञ्चानामित्यादि** । मूलगुणाः प्राणातिपातनिवृत्त्यादयः पञ्च क्षपाभोजनविरतिश्च तानपरेणाभियुज्यमानः सेवते । **पराभियोगादित्यस्यैव** व्याख्या—**बलात्कारेण** वा परेणाभियुक्तः प्रेरितो यदा भवति तदा प्रवर्तते, न स्वरसत एव । परैस्तु राजादिभिर्बलात्कारेण प्रवर्त्यते । तदेवमन्यतमं मूलगुणं **प्रतिसेवमानः पुलाको भवति । मैथुनमित्येके** । अपरे आचक्षते-मैथुनमेवेत्थं पराभियोगात् बलात्कारेण सेवां कार्यते स पुलाकः, न प्राणातिपातं सेवमान इति । अत्राप्यन्यथैवागमः[5]—"पुलाए[6] णं भंते ! किं पडिसेवए होज्जा अप्पडिसेवए होज्जा ? गोयमा ! पडिसेवए, नो अपडिसेवए । जइ पडिसेवए किं मूलगुणपडिसेवए उत्तरगुणपडिसेवए ? मूलगुणपडिसेवए

मतान्तरम्

१ 'आगमरहितः' इति ग–पाठः । २ कोऽयमागम इति न निर्णीयते, सदृक् पाठस्तु समस्ति **भगवत्यां** (श० २५, उ० ६, सू० ७५७) । ३ छाया–पुलाको भदन्त ! कियत् श्रुतमधीयेत ? गौतम ! जघन्येन नवमस्य पूर्वस्य तृतीयमाचारवस्तु, उत्कृष्टेन नव पूर्वाणि सम्पूर्णानि, बकुशप्रतिसेवनाकुशीलौ जघन्येन अष्टप्रवचनमातरः, उत्कृष्टेन चतुर्दश पूर्वाणि अधीयेयाताम् । कषायकुशीलनिर्ग्रन्थौ जघन्येन अष्टप्रवचनमातरः, उत्कृष्टेन चतुर्दश पूर्वाणि अधीयेयाताम् । ४ 'दस पुव्वाई' इति मुद्रितायां **भगवत्याम्** । ५ प्राय ईदृक् पाठो वर्तते **भगवत्यां** (श० २५, उ० ६, सू० ७५५)। ६ पुलाको भदन्त ! किं प्रतिसेवको भवेत् अप्रतिसेवको भवेत् ? । गौतम ! प्रतिसेवकः नो अप्रतिसेवकः । यदि प्रति-

उत्तरगुणपडिसेवए य । मूलगुणे पडिसेवमाणे पंचण्हं महव्वयाणं अण्णयरं पडिसेवे उत्तरगुणे पडिसेवमाणे दसविहस्स पच्चक्खाणस्स अण्णयरं पडिसेवेज्जा ॥ "

बकुशस्य द्वैविध्यम्

**भा०—बकुशो द्विविधः—उपकरणबकुशः शरीरबकुशश्च । तत्रोपकरणाभिष्वक्तचित्तो विविधविचित्रमहाधनोपकरणपरिग्रहयुक्तो बहुविशेषोपकरणाकाङ्क्षायुक्तो नित्यं तत्प्रतिसंस्कारसेवी भिक्षुरुपकरणबकुशो भवति ॥**

**टी०—बकुशो** द्विधा–उपकरण–शरीरभेदात् । तत्र–तयोरुपकरणबकुश **उपकरणे**–वस्त्र-पात्रादौ **अभिष्वक्तचित्तः**–प्रतिबद्धस्नेहः समुपजाततोषः । वस्त्रं विविधं देशभेदेन पौण्ड्रवर्धनककासाकुलकादि । पात्रमपि पुरिकागन्धधारकप्रतिग्रहकादिविचित्रं रक्तपीतबिन्दु-सितपट्टकादिप्रचितं **महाधनं**–महामूल्यम् । एवमादिना **उपकरणपरिग्रहेण युक्तो** ममेदं स्वं अहमस्य स्वामीत्युपजातमूर्च्छः पर्याप्तोपकरणोऽपि भूयो **बहुविशेषोपकरणाकाङ्क्षायुक्तः** बहुविशेषो यत्र मृदु-दृढ-श्लक्ष्ण-घन-निचित-रुचिरवर्णादि तादृश्युपकरणे लब्धव्ये जात-काङ्क्षो–जाताभिलाषः । सर्वदा च तस्योपकरणस्य **प्रतिसंस्कारं** प्रक्षालनदशाबन्धघटिकासंवेष्टनादिकं **सेवमानस्तच्छील उपकरणबकुशः** ॥

**भा०—शरीराभिष्वक्तचित्तो विभूषार्थं तत्प्रतिसंस्कारसेवी शरीरबकुशः । प्रतिसेवनाकुशीलो मूलगुणानविराधयन् उत्तरगुणेषु काञ्चिद् विराधनां प्रतिसेवते । कषायकुशील–निर्ग्रन्थ-स्नातकानां प्रतिसेवना नास्ति ॥**

**टी०**—शरीरबकुशस्तु **शरीराभिष्वक्ते**त्यादि । तस्य-शरीरस्याभ्यञ्जनोद्वर्तनस्नानादिकं **प्रतिसंस्कारं सेवमानस्तच्छील** एव भवति । एष चोत्तरगुणभ्रंशकारी, न तु मूलगुणान् विराधयति । यथोक्तमागमे—" बंउसे पुच्छा । गोयमा ! नो मूलगुणपडिसेवी होज्जा उत्तरगुणपडिसेवी होज्जा । उत्तरगुणे पडिसेवमाणे दसविहस्स पच्चक्खाणस्स अण्णयरं पडिसेवेज्जा " ।

---

सेवकः किं मूलगुणप्रतिसेवक उत्तरगुणप्रतिसेवकः ? मूलगुणप्रतिसेवकः उत्तरगुणप्रतिसेवकश्च । मूलगुणान् प्रतिसेवमानः पञ्चानां महाव्रतानां अन्यतरं प्रतिसेवेत उत्तरगुणान् प्रतिसेवमानो दशविधस्य प्रत्याख्यानस्य अन्यतरं प्रतिसेवेत ।

१ ' काङ्गधारक ' इति ग–पाठः ।

२ छाया—

बकुशे पृच्छा । गौतम ! नो मूलगुणप्रतिसेवी भवेत्, उत्तरगुणप्रतिसेवी भवेत् । उत्तरगुणान् प्रतिसेवमानो दशविधस्य प्रत्याख्यानस्यान्यतरं प्रतिसेवेत ।

३ 'सेवए' इति भगवत्यां (श० २५, उ० ६, सू० ७५५) ।

प्रतिसेवनाकुशीलो मूलगुणान् प्राणातिपातनिवृत्त्यादीनविराधयन्-अखण्डयन्नुत्तरगुणेषु दशसु काश्चिद् विराधनां न सर्वां कदाचिदेव प्रतिसेवत इति।

आगमे मान्यताभेदः

अत्रागमोऽन्यथाऽतिदेशकारी-"[1] पडिसेवणाकुसीलो जहा पुलागो"[2]। कषायकुशीलस्य निर्ग्रन्थस्नातकयोश्च नास्त्येव प्रतिसेवनेति ॥

**भा०—तीर्थम्। सर्वे सर्वेषां तीर्थकराणां तीर्थेषु भवन्ति। एके त्वाचार्या मन्यन्ते-पुलाक-बकुश-प्रतिसेवनाकुशीलास्तीर्थे नित्यं भवन्ति, शेषास्तीर्थे वाऽतीर्थे वा ॥**

मतान्तरम्

टी०—तरन्त्यनेनेति तीर्थं-प्रवचनं प्रथमगणधरो वा। तत्र किं कस्यचिदेव तीर्थकृतस्तीर्थेषु पुलाकादयो भवन्त्युत सर्वेषामेव तीर्थकराणामित्याह—**सर्वे सर्वेषामित्यादि**। सर्वे पुलाकादयः सर्वेषां तीर्थकृतां **तीर्थेषु भवन्ति। एके त्वाचार्या इत्यादि।** पुलाको बकुशः प्रतिसेवनाकुशीलश्च नित्यं तीर्थ एव। **शेषाः** कषायकुशील-निर्ग्रन्थ-स्नातकाः तीर्थे भवन्ति। एते कदाचिदतीर्थेऽपि मरुदेवीप्रभृतयः श्रूयन्त इति। इदमेव चादेशान्तरमाश्रित्यागमम्[3]उपलभामहे—"[4]पुलागे णं भंते! किं तित्थे होज्जा अतित्थे वा होज्जा? गोयमा! तित्थे होज्जा नो अतित्थे। एवं बउसपडिसेवणाकुसीला वि कसायकुसीला तित्थे वा होज्जा अतित्थे वा होज्जा? एवं नियंठसिणाया वि"॥

मतभेदः

**भा०—लिङ्गम्। लिङ्गं द्विविधं-द्रव्यलिङ्गं भावलिङ्गं च। भावलिङ्गं प्रतीत्य सर्वे पञ्च निर्ग्रन्था भावलिङ्गे भवन्ति, द्रव्यलिङ्गं प्रतीत्य भाज्याः ॥**

टी०—**लिङ्गं द्विविधमित्यादि।** लिङ्गं-चिह्नं मुमुक्षोः। तच्च द्विधा-द्रव्य-भावभेदात्। तत्र द्रव्यलिङ्गं रजोहरण-मुखवस्त्रिकादि। भावलिङ्गं ज्ञान-दर्शन-चारित्राणि। **भावलिङ्गं प्रतीत्य**-निसृत्य **सर्वे पञ्चापि** पुलाकादयो **भावलिङ्गे भवन्त्येव। द्रव्यलिङ्गं प्रतीत्य भाज्याः** कदाचिद् रजोहरणादि भवति कदाचिन्नेति, मरुदेवी-भरतप्रभृतीनामिति ॥

**भा०—लेश्याः। पुलाकस्योत्तरास्तिस्रो लेश्या भवन्ति। बकुश-प्रतिसेवनाकुशीलयोः सर्वाः षडपि। कषायकुशीलस्य परिहारविशुद्धेस्तिस्र उत्तराः। सूक्ष्म-**

---

१ छाया—

प्रतिसेवनाकुशीलो यथा पुलाकः।

२ 'कुसीले जहा पुलाए' इति भगवत्या (श० २५, उ० ६, सू० ७५५)।

३ सन्तुल्यतां यदुक्तं भगवत्यां (सू. ७५८)।

४ छाया—

पुलाको भदन्त! किं तीर्थे भवेत् अतीर्थे वा भवेत्? गौतम! तीर्थे भवेत्, नो अतीर्थे। एवं बकुशप्रतिसेवनाकुशीला अपि। कषायकुशीलः तीर्थे वा भवेत् अतीर्थे वा भवेत्। एवं निर्ग्रन्थस्नातकौ अपि।

सम्परायस्य निर्ग्रन्थ-स्नातकयोश्च शुक्लैव केवला भवति। अयोगः शैलेशीप्रतिपन्नोऽलेश्यो भवति ॥

टी०—लेश्याः पूर्वोक्तनिर्वचनाः। उत्तराः पारमर्षक्रमप्रामाण्यात् पुलाकस्य तैजसी-पद्म-शुक्लनामानस्तिस्रो भवन्ति। बकुश-प्रतिसेवनाकुशीलयोः सर्वाः। कियन्त्यः? सर्वाः षडपीत्याह। परिहारविशुद्धिसंयमप्राप्तस्य कषायकुशीलस्य एता एव तिस्रः। सूक्ष्मसम्परायसंयमप्राप्तस्य कषायकुशीलस्य तथा [1]निर्ग्रन्थस्य सयोगस्नातकस्य च त्रयाणामप्येषां शुक्लैव, केवला—अन्यलेश्यानिरपेक्षेति। शैलेशीप्रतिपन्नस्त्वयोगकेवली नियमेनालेश्य एव भवति ॥

भा०—उपपातः। पुलाकस्योत्कृष्टस्थितिषु देवेषु सहस्रारे। बकुश-प्रतिसेवनाकुशीलयोर्द्वाविंशतिसागरोपमस्थितिष्वारणा-ऽच्युतकल्पयोः। कषायकुशीलनिर्ग्रन्थयोस्त्रयस्त्रिंशत्सागरोपमस्थितिषु देवेषु सर्वार्थसिद्धे। सर्वेषामपि जघन्या पल्योपमपृथक्त्वस्थितिषु सौधर्मे। स्नातकस्य निर्वाणमिति ॥

टी०—उपपात इति उपपत्तिः—जन्मान्तरप्राप्तिः, पूर्वजन्मपरित्यागेन स्थानान्तरप्राप्तिरित्यर्थः। सहस्रारेऽष्टादशसागरोपमा स्थितिरुत्कृष्टा। तत्र पुलाकस्योत्पत्तिर्जन्ममरणोत्तरकालम्। बकुश-प्रतिसेवनाकुशीलयोः अच्युते द्वाविंशतिसागरोपमास्थितिषूत्पत्तिः। कषायकुशील-निर्ग्रन्थयोः सर्वार्थसिद्धविमाने त्रयस्त्रिंशत्सागरोपमस्थितिषूत्पत्तिः[2]। सर्वेषां पुलाकादीनां शमितकषायाणां[3] प्रथमकल्पे जघन्येन द्विप्रभृत्या नवभ्यः पृथक्त्वपरिभाषात् स्थितिकेषु देवेषूत्पत्तिः। स्नातकस्य निर्वाणस्थानप्राप्तिरेवेति स्थानद्वारमधुना चिन्त्यते—

भा०—स्थानम् असङ्ख्येयानि संयमस्थानानि कषायनिमित्तानि भवन्ति। तत्र सर्वजघन्यानि लब्धिस्थानानि पुलाक-कषायकुशीलयोः। तौ युगपदसङ्ख्येयानि स्थानानि गच्छतः। ततः पुलाको व्युच्छिद्यते। कषायकुशीलस्तु असङ्ख्येयानि स्थानान्येकको गच्छति। ततः कषायकुशील-प्रतिसेवनाकुशील-बकुशा युगपदसङ्ख्येयानि संयमस्थानानि गच्छन्ति। ततो बकुशो व्युच्छिद्यते। ततोऽसङ्ख्येयानि स्थानानि गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते। ततोऽसङ्ख्येयानि स्थानानि गत्वा कषायकुशीलो व्युच्छिद्यते। अत ऊर्ध्वमकषायस्थानानि निर्ग्रन्थः प्रतिपद्यते। सोऽप्यसङ्ख्येयानि स्थानानि गत्वा व्युच्छिद्यते। अत ऊर्ध्वमेकमेव[4] स्थानं गत्वा निर्ग्रन्थ-स्नातको निर्वाणं प्राप्नोति। [5]एषां संयमलब्धिरनन्तानन्तगुणा भवतीति ॥ ४९ ॥

निर्ग्रन्थानामध्यवसायस्थानानि

---

१ 'निर्ग्रन्थकुशीलस्य' इति ग-पाठः। २ 'स्थित्युत्पत्तिः' इति च-पाठः। ३ 'कषान्तानां' इति ग-पाठः। ४ 'ऊर्ध्वमेव' इति ग-पाठः। ५ 'एतेषां इति' ग-पाठः।

टी०—असङ्ख्येयानीत्यादि । स्थानमित्यध्यवसायस्थानं परिणामस्थानं संयमस्थानमिति पर्यायाः । तत्र यावत् सकषायस्तावत् सङ्क्लेशविशोधयोऽवश्यम्भाविन्यः । क्षीणकषायस्य तु विशोधिरेव, न सङ्क्लेशः । तत्र सकषायस्यासङ्ख्येयानि संयमस्थानानि भवन्ति । तत्रैकस्य प्रथमसंयमस्थानस्य पर्यायपरिमाणमिदमागमोक्तम्—

"[1]सव्वागासपदेसग्गं सव्वागासपएसेहिं अणंतगुणियं पढमं संजमट्ठाणं भवति" ।

का पुनर्भावना ? उच्यते—

"[2]सव्वगयं संमत्तं सुए चरित्ते ण पज्जवा सव्वे ।
देसविरतिं पडुच्च दोण्ह वि पडिसेहणं कुज्जा ॥ १ ॥ —आर्या
[3]सव्वदव्वाणि जतो सव्वदव्वाण पज्जवा जे य ।
सव्वा णय बोधव्वा तिकालविसयम्मि जे भणिया ॥ २ ॥— „
सव्वे वि य सद्दहओ सव्वस्स उवएसतो व संमत्तं ।
तव्विवरीयं मिच्छत्तं दरिसणं देसियं समए ॥ ३ ॥ — „

एएणं कारणेणं सव्वागासपएसग्गं सव्वागासप्पएसेहिं अणंतगुणियं पढमं संजमट्ठाणं पज्जायवग्गेण भवति । ततो एयं चेव पढमं संजमट्ठाणं एयप्पमाणपरिणामविसुद्धिनिमित्तेणाधिगतरं भवति । ततो पढमं संजमट्ठाणपरिणामविसुद्धाओ बीयं संजमट्ठाणपरिणामो विसुद्धतरो त्ति काउं पढमसंजमट्ठाणाओ बीयं संजमट्ठाणं अणंतभागमब्भहियं । एतेण चेव कमेण बीया-

---

१ छाया—

सर्वाकाशप्रदेशकं सर्वाकाशप्रदेशैः अनन्तगुणितं प्रथमं संयमस्थानं भवति ।

२ आवश्यकनिर्युक्तेरियं ८३०तमी गाथा । तच्छाया चैवम्—

सर्वगतं सम्यक्त्वं सूत्रे चारित्रे न पर्यवाः सर्वे ।
देशविरतिं प्रतीत्य द्वयोरपि प्रतिषेधनं कुर्यात् ॥

३ 'सेवणे' इति च-पाठः ।

४ छाया—

सर्वद्रव्याणि यतो सर्वद्रव्याणां पर्यवा ये च ।
सर्वे नया बोधव्यास्त्रिकालविषये ये भणिताः ॥
सर्वेऽपि च श्रद्धधतः सर्वस्य उपदेशात् वा सम्यक्त्वम् ।
तद्विपरीतं मिथ्यात्वं दर्शनं देशितं समये ॥

एतेन कारणेन सर्वाकाशप्रदेशगं सर्वाकाशप्रदेशैरनन्तगुणितं प्रथमं संयमस्थानं पर्यायवर्गेण भवति । तत एतत् चैव प्रथमं संयमस्थानं एतत्प्रमाणपरिणामविशुद्धिनिमित्तेन अधिकतरं भवति । ततः प्रथमं संयमस्थानपरिणामविशुद्धेर्द्वितीयं संयमस्थानपरिणामो विशुद्धतर इति कृत्वा प्रथमसंयमस्थानाद् द्वितीयं संयमस्थानमनन्तभागमभ्यधिकम् । एतेन चैव क्रमेण द्वितीयात् तृतीयमनन्तभागमभ्यधिकं यावत् चरममनन्तभागमभ्यधिकम् ।

ओ ततियं अणंतभागमब्भहियं जाव चरिमं अणंतभागमब्भहियं" । एवं संयमस्थानप्ररूपणा । "एतेसिं चेव जहा भणिताणं संजमट्ठाणाणं असंखिज्जाणं समुदएणं जं निप्पज्जइ तं कंडगं ति वा अंतरकंडगं ति वा भणइ । एगंमि कंडके केवतियाई संजमट्ठाणाई ? असंखिज्जाई असंखिज्जाहिं उस्सप्पिणीहिं कालओ अवहारंति, खेत्तओ अंगुलस्स असंखिज्जाई भागेणं ॥

सम्प्रति भाष्यभावना क्रियते । पुलाकादिस्थाननिरूपणद्वारेण निदर्शनमात्रमिदं भाष्यभावनार्थमुपन्यस्तं पुलाकस्य कषायकुशीलस्य सर्वजघन्यानि स्थानान्यधः । ततस्तौ युगपदसङ्ख्येयानि स्थानानि गच्छतः, तुल्याध्यवसानत्वात् । ततः पुलाको व्युच्छिद्यते, हीनपरिणामत्वात् । व्युच्छिन्ने पुलाके कषायकुशीलस्त्वेक एवासङ्ख्येयानि स्थानानि गच्छति, वर्धमानपरिणामत्वात् । ततः कषायकुशील-प्रतिसेवनाकुशील-बकुशा युगपदसङ्ख्येयानि स्थानानि प्राप्नुवन्ति । ततश्च बकुशो व्युच्छिद्यते । ततोऽप्यसङ्ख्येयानि स्थानानि गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते। ततोऽप्यसङ्ख्येयानि स्थानानि गत्वा कषायकुशीलो व्युच्छिद्यते। एवमेतानि स्थानानि द्रष्टव्यानि । अत ऊर्ध्वमिति कषायकुशीलव्युच्छेदनादुपरि अकषायस्थानानि निर्ग्रन्थः प्रतिपद्यते । सोऽप्यसङ्ख्यातानि गत्वा व्युच्छिद्यते । अत ऊर्ध्वं–निर्ग्रन्थस्थानादुपरि गत्वा निर्ग्रन्थः क्षपितसकलकर्मांशः स्नातको निर्वाणमेवाप्नोति । एषां च पुलाकादीनां संयमलब्धिः संयमस्थानप्राप्तिरुत्तरोत्तरस्यानन्तानन्तगुणा भवतीति भावितमेवेति ॥ ४९ ॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसंग्रहे भाष्यानुसारिण्यां तत्त्वार्थटीकायां संवरस्वरूपनिरूपको नाम नवमोऽध्यायः समाप्तः ॥ ९ ॥

१ एतेषु चैव यथा भणितानां संयमस्थानानाम् असङ्ख्येयानां समुदयेन यत् निष्पद्यते तत् कण्डकमिति वा अन्तरकण्डकमिति वा भणति । एकस्मिन् कण्डके कतिपयानि संयमस्थानानि ? असङ्ख्येयानि असङ्ख्याताभिरुत्सर्पिणीभिः कालतोऽवहारन्ति, क्षेत्रतोऽङ्गुलस्य असङ्ख्यातानि भागेन ।

श्रीपरमगुरुभ्यो नमः ।

# दशमोऽध्यायः १०

टी०—निर्दिष्टे संवर-निर्जरे "आस्रवनिरोधः संवरः" (अ० ९, सू० १), "तपसा निर्जरा च" (अ० ९, सू० ३) इति । सम्प्रति तत्फलं मोक्षः तं वक्ष्यामः । स च केवलज्ञानोत्पत्तिमन्तरेण न जातुचिद् भूद् भवति भविष्यति । अतः केवलोत्पत्तिमेव तावद् वक्ष्यामः—

उपक्रमः

## सूत्रम्—मोहक्षयात् ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् ॥ १०—१ ॥

टी०—अथवा तपसा निर्जरातश्च कर्मणां केवलज्ञानमुत्पद्यते । तत् केषां कर्मणां निर्जरातः केन वा क्रमेण निर्जरणे सति केवलज्ञानमाविर्भवतीति ? । तानि कर्माणि क्रमं चानेन सूत्रेण दर्शयति—**मोहक्षयात् ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम्** ॥

**भा०—मोहनीये क्षीणे ज्ञानदर्शनावरणान्तरायेषु क्षीणेषु च केवलज्ञानदर्शनमुत्पद्यते । आसां चतसृणां प्रकृतीनां क्षयः केवलस्य हेतुरिति । तत्क्षयादुत्पद्यते इति ।**

टी०—मोहनान्मोहोऽष्टाविंशतिभेदः पूर्वोक्तः (पृ० १४२) । तस्य क्षयो—निरवशेषतः परिशाटनमात्मप्रदेशेभ्यः । क्षीणे च सकलभेदमोहनीये ज्ञानावरणदर्शनावरणान्तरायेषु च पञ्च-चतुः-पञ्चभेदेषु युगपत् क्षीणेषु—निरवशेषीकृतेषु केवलज्ञानं दर्शनमाविर्भवति—समस्तद्रव्यपर्यायपरिच्छेदिघातिकर्मविगमादुत्पद्यते । यथोक्तम्—

"तस्य हि तस्मिन् समये, केवलमुत्पद्यते गततमस्कम् ।
ज्ञानं च दर्शनं चावरणद्वयसङ्क्षयाच्छुद्धम् ॥ १ ॥—आर्या
चित्रं चित्रपटनिभं, त्रिकालसहितं ततः स लोकमिमम् ।
पश्यति युगपत् सर्वं, सालोकं सर्वभावज्ञः ॥ २ ॥"

**आसामिति** सूत्रनिर्दिष्टानां कियतीनाम् ? **चतसृणां कर्मप्रकृतीनां**—कर्मस्वभावानां मोहनं आच्छादनं विघ्नकारित्वं चेति स्वभावाः । **क्षयो**—निःशेषसादः । **केवलस्य** ज्ञानस्य दर्शनस्य च । **हेतुः** कारणं निमित्तमिति पर्यायाः । फलसाधनयोग्यः पदार्थो हेतुरिति भाषितः ।

अभावोऽपि हि निमित्तं भवति यथा विपक्षे हेतुरभावद्वारेण गमकः । **तत्क्षयादुत्पद्यत** इति, घातिकर्मक्षयाज्जायत इत्यर्थः । अतस्तद्विगमलक्षणो गुणो हेतुः । "विभाषा गुणेऽस्त्रियां" ( पा० अ० २, पा० ३, सू० २५ ) इति ॥

**भा०—हेतौ पञ्चमीनिर्देशः। मोहक्षयादिति पृथक्करणं क्रमप्रसिद्ध्यर्थम्। यथा—गम्येत पूर्वं मोहनीयं कृत्स्नं क्षीयते। ततोऽन्तर्मुहूर्तं छद्मस्थवीतरागो भवति। ततोऽस्य ज्ञानदर्शनावरणान्तरायप्रकृतीनां तिसृणां युगपत् क्षयो भवति। ततः केवलमुत्पद्यत इति ॥ १ ॥**

टी०—**हेतौ पञ्चमीनिर्देशः । मोहक्षयादिति ।** सापेक्षे कर्मचतुष्टये व्यपेते निरावरणो जीवस्वभावो ज्ञानदर्शनलक्षणः सदा चकास्ति । तस्य च सापेक्षकर्मविगमो निमित्तं किरणमालिन इवातिबहलाभ्रपटलप्रच्छादितमण्डलस्य सङ्कुचितकिरणकलापस्य तदपगमे निरावरणसमस्तगभस्तिविस्तरणवद् विकसति ज्ञानं दर्शनं च । **मोहक्षयादिति पृथक्करणं** प्रतिविशिष्ट**क्रमप्रसिद्ध्यर्थम्** । क्रमप्रसिद्धिः **यथा**ऽऽगमे तत् प्राङ्मोहनीयक्षय एव सर्वस्य मुमुक्षोः । ततश्च मोहसागरमुत्तीर्यान्तर्मुहूर्तमात्रं विश्राम्यति **छद्मस्थवीतरागावस्थः** । **ततोऽस्य ज्ञानदर्शनावरणान्तरायक्षयो युगपदेव भवति** । तत्समनन्तरमेव च केवलज्ञानं केवलदर्शनं चोपजनमासादयति । यथोक्तमागमे—"[2]वीसमिऊण नियंठो" इत्यादि "[3]चरिमे नाणावरणं" इत्यादि ॥ १ ॥

**भा०—अत्राह—उक्तं ( पृ० २९३ ) मोहक्षयात् ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलमिति । अथ मोहनीयादीनां क्षयः कथं भवतीति ? । अत्रोच्यते—**

टी०—**अत्राह—उक्त**मित्यादिनोत्तरसूत्रं सम्बध्नाति । **मोहक्षयात् केवल**ज्ञानोत्पत्तिः । **अथैषां मोहादीनां क्षयः कथं**—केन प्रकारेण **भवतीति** ? । अयमभिप्रायः प्रश्नयतः—यावदपि सकषाययोगस्तावदपि कर्म सततं बध्नाति कषाययोगप्रत्ययम् । तच्च प्रतिक्षणं बध्नन् कथं क्षयं करोतीति ? । **अत्रोच्यत** इत्याह—

कर्मपरिक्षये हेतू **सूत्रम्—बन्धहेत्वभाव-निर्जराभ्याम् ॥ १०–२ ॥**

टी०—आत्मप्रदेशानां कर्मपुद्गलानां चान्योन्यानुगतलक्षणः क्षीरोदकवद् बन्धः । तस्य हेतुर्मिथ्यादर्शनादिपञ्चविधः । तस्य हेतोरभावादपूर्वकर्मागमो नास्ति । प्रथमबद्धस्य च निर्जरणं निर्जरा—आत्मप्रदेशेभ्यः परिशटनं कर्मणः । बन्धहेत्वभावश्च निर्जरा च **बन्धहेत्वभाव-निर्जरे** ताभ्यां हेतुभ्यां कर्मपरिक्षयः ॥

---

१ 'तथा विपक्षे' इति ङ-पाठः ।

२–३ छाया—

विश्रामयित्वा निर्ग्रन्थः; चरमे ज्ञानावरणम् ।

४ 'सन्तानं' इति ग-पाठः । ५ 'प्रदेशिनां' इति ग—पाठः ।

**भा०—मिथ्यादर्शनादयो बन्धहेतवोऽभिहिताः ( पृ० १२१ )। तेषामपि तदावरणीयस्य कर्मणः क्षयादभावो भवति सम्यग्दर्शनादीनां चोत्पत्तिः। "तत्त्वार्थश्रद्धानं सम्यग्दर्शनं" ( अ० १, सू० २ ), "तन्निसर्गादधिगमाद् वा" (अ० १, सू० ३ ) इत्युक्तम् ॥**

**टी०—मिथ्यादर्शनादय** इत्यादि भाष्यम्। प्रागभिहिता मिथ्यादर्शनादयस्तेषामपि मिथ्यादर्शनादीनां बन्धहेतूनां **तदावरणीयस्य कर्मणः क्षयादभावो भवति**। मिथ्यादर्शनं अज्ञानविशेषः। ज्ञानावरणीयेन कर्मणा ज्ञानमेवाच्छादितं सदज्ञानमुच्यते। अन्यथा व्यवस्थितान् जीवादिपदार्थान् अन्यथा-वैपरीत्येन प्रतिपद्यते, अत आह-**तदावरणीयस्य कर्मणः क्षयात्**आत्यन्तिकात् तस्य मिथ्याज्ञानस्य यदावरणं तदभावान्मिथ्यादर्शनाभावः। नाप्यविरति-प्रमाद-कषाया-दर्शनावरणमोहक्षयात् योगनिरोधकाले च योगनिमित्तोऽप्यपैति बन्धः। इत्थं बन्धहेत्वभावे सति निर्जरणमुपचितस्य कर्मणोऽन्त्यकाले समस्ति। **सम्यग्दर्शनज्ञानावरणानां**[1] **चोत्पत्तिः** प्रागभिहितानामुपलक्षयति—**"तत्त्वार्थश्रद्धानं सम्यग्दर्शनं"** (अ० १, सू०२) **"तन्निसर्गादधिगमाद् वा"** (अ० १, सू० ३) **इत्युक्तैव** न पुनरपि व्याख्यायते। अथवा सर्वमेतत् पूर्वमुक्तम्।

**भा०—एवं संवरसंवृतस्य महात्मनः सम्यग्व्यायामस्याभिनवस्य कर्मणः उपचयो न भवति।**

**टी०—एवं संवरसंवृतस्येत्यादि**। एवम् उक्तेन प्रकारेण बन्धहेत्वसम्भव एव संवरस्तेन संवृतस्य-स्थगितसकलास्रवद्वारस्य **महात्मनः** परमातिशयसम्पन्नस्य **सम्यग्व्यायामस्य**-सम्यक्क्रियानुष्ठायिनः छद्मस्थस्य सयोगिकेवलिनश्च निरुद्धसकलयोगस्य च **अभिनवस्य**अपूर्व-**कर्मणः उपचयो**-बन्धो **न भवति** ॥

**भा०—पूर्वोपचितस्य च यथोक्तैर्निर्जराहेतुभिरत्यन्तक्षयः। ततः सर्वद्रव्यपर्यायविषयं पारमैश्वर्यमनन्तं केवलं ज्ञानदर्शनं प्राप्य शुद्धो बुद्धः सर्वज्ञः सर्वदर्शी जिनः केवली भवति। ततः प्रतनुशुभचतुःकर्मावशेषः आयुःकर्मसंस्कारवशाद् विहरति ॥ २ ॥ ततोऽस्य**

**टी०—पूर्वोपचितस्य**-प्राग्बद्धस्य क्षयो **यथोक्तै**स्तपोऽनुष्ठानादिभि**र्निर्जराहेतुभि**रात्यन्तिको घातिकर्मक्षयः, इतरस्तु भवधारणीयक्षयः। **ततो** घातिकर्मक्षयात् समनन्तरमेव समस्त**द्रव्यपर्यायविषय**मित्यनेनैतावदेव ज्ञेयमिति सूचयति। **परं**-प्रकृष्ट**मैश्वर्य**-विभूतिः परम्-असाधारणं ईश्वरत्वं ऐश्वर्यं **अनन्त**मपर्यवसानत्वादनुच्छेदित्वात् **केवलम्**-असहायं मत्यादि-रहितं **ज्ञानं** च **दर्शनं** च **प्राप्य**-लब्ध्वा **शुद्धो** धौतोऽपनीत[2]सकलकर्ममलः। **बुद्ध** इति कर्तरि

१ 'सम्यग्दर्शनज्ञानावरणानां' इति ग-पाठः। २ 'अपगत' इति ग-पाठः।

निष्ठा। बुध्यतेरकर्मकत्वात् सुप्तविबुद्धवल्लोके प्रयोगदर्शनादकर्मकत्वम्। बुध्यत इति बुद्धः, ज्ञानस्वभाव इत्यर्थः। केवलज्ञानेन सर्वं जानीत इति सर्वज्ञः। केवलदर्शनेन सर्वं पश्यतीति सर्वदर्शी। रागद्वेषमोहजिज्जिनः। केवली केवलज्ञानदर्शनसम्भवात्। तत उत्पन्नकेवलज्ञानः प्रतनूनि-स्वल्पानुभावानि शुभविपाकानि च प्रायश्चत्वारि कर्माण्यवशेषाणि यस्य वेद्या-ऽऽयु-र्नाम-गोत्राणि स चायुषः कर्मणः संस्कारवशात्, प्रतिक्षणमनुवृत्तिः संस्कारः, तद्वशाद् विहरति भव्यजनकुमुदवनबोधनाय शीतरश्मिरिव कदाचिद् ध्याति विहरति तिष्ठन्नपि वा। विविधं रजो हरतीति विहरति ॥ २ ॥

ततोऽस्य विहरत उक्तेन विधिना आयुष्ककर्मपरिसमाप्तावितराण्यपि त्रीणि कर्माणि क्षीयन्ते। अतः—

## सूत्रम्—कृत्स्नकर्मक्षयो मोक्षः ॥ १०-३ ॥

टी०—कृत्स्नं-सम्पूर्णं निरवशेषं ज्ञानावरणाद्यन्तरायपर्यवसानमष्टविधं मूलप्रकृतिवाच्यं, उत्तरप्रकृतीनां तु द्वाविंशत्युत्तरं शतम्। एतत् कृत्स्नं कर्म तस्य क्षयः-शाटः आत्मप्रदेशेभ्यो-ऽपगमः। कर्मराशेर्मोक्षः, आत्मनः स्वात्मावस्थानमिति ॥

भा०—कृत्स्नकर्मक्षयलक्षणो मोक्षो भवति।

टी०—कृत्स्नकर्मक्षयलक्षण इत्यादि भाष्यम्। कृत्स्नकर्मक्षयो लक्षणं यस्य मोक्षस्य। कृत्स्नकर्मविमुक्त्या आत्मा मुक्त इति लक्ष्यते। स एव मोक्षः सकलकर्मविमुक्तस्य ज्ञानदर्शनो-पयोगलक्षणस्यात्मनः स्वात्मन्यवस्थानं मोक्षः, न पुनरात्माभाव एव। परिणामिनो निरन्वय-नाशे न तदुपपत्तिदृष्टान्तौ परिणामित्वादेव ज्ञानाद्यात्मा न सोऽभावः। स च कर्मणामपगमः क्रमेणाप्नुनेति दर्शयति—

भा०—पूर्वं क्षीणानि चत्वारि कर्माणि पश्चाद् वेदनीय-नाम-गोत्रा-ऽऽयुष्क-क्षयो भवति। तत्क्षयसमकालमेवौदारिकशरीरवियुक्तस्यास्य जन्मनः प्रहाणम्। हेत्वभावाच्चोत्तरस्याप्रादुर्भावः। एषाऽवस्था कृत्स्नकर्मक्षयो मोक्ष इत्युच्यते ॥ ३ ॥

किञ्चान्यत्—

टी०—केवलज्ञानोत्पत्तेः प्राक्-पूर्वं मोहनीयज्ञानदर्शनावरणान्तरायाख्यानि चत्वारि घातिकर्माणि क्षीणानि। ततः केवलज्ञानोत्पत्तिः पश्चाद् वेदनीय-नाम-गोत्रा-ऽऽयुष्कक्षयो भवतीति। केवलज्ञानोत्पादात् पश्चाद्वेदनीयादीनि चत्वारि कर्माणि क्षयं प्रतिपद्यन्ते भवधार-णीयानि। तत्र का प्रकृतिः क्व गुणस्थाने क्षीणेति प्रपञ्चेन प्रदर्श्यते—अविरतसम्यग्दृष्टि-देश-यति-प्रमत्ताप्रमत्तस्थानानामन्यतमस्थाने मोहनीयप्रकृतयः सप्त क्षीणाः, अनन्तानुबन्धिनश्चत्वारः सम्यक्त्व-मिथ्यात्व-तदुभयानि च। अतोऽनिवृत्तिस्थाने मोहनीयप्रकृतयो विंशतिः क्षीणाः,

१ 'तदुत्पत्ति' इति क-पाठः।

नामकर्मप्रकृतयश्च त्रयोदश, दर्शनावरणप्रकृतयश्च तिस्रः। क्रमेणानेनाप्रत्याख्यानाः क्रोधादयश्चत्वारः, प्रत्याख्यानावरणाः क्रोधादयश्चत्वारः, नरकगतिः, नरकगत्यानुपूर्वी, तिर्यग्गतिः, तिर्यग्गत्यानुपूर्वी, एक-द्वि-त्रि-चतुरिन्द्रियजातयः, आतपं, उद्द्योतं, स्थावरं, सूक्ष्मं, साधारणं च। निद्रानिद्रा प्रचलाप्रचला स्त्यानर्द्धिः। ततो नपुंसक-स्त्रीवेदौ हास्य-रत्य-ऽरति-शोक-भय-जुगुप्साः पुरुषवेदश्च संज्वलनक्रोधमानमाया इति सूक्ष्मसम्परायस्थाने चरमसमये संज्वलनलोभः क्षीणः। ततः क्षीणकषायस्थाने निद्रा-प्रचले द्वे द्विचरमसमये क्षीणे। चरमसमये तु प्रकृतयश्चतुर्दश क्षीणाः—ज्ञानदर्शनावरणविघ्नानि पञ्च-चतुः-पञ्चभेदानि। अयोगिकेवलिनो द्विचरमसमये नामप्रकृतयः पञ्चचत्वारिंशत् क्षीणाः। ताश्चेमाः—देवगतिः, औदारिकादिशरीरपञ्चकं, संस्थानषट्कं, अङ्गोपाङ्गत्रयं, संहननषट्कं, वर्ण-गन्ध-रस-स्पर्शचतुष्टयं, मनुष्यदेवगत्यानुपूर्व्यौ, अगुरुलघु, उपघातं, पराघातं, उच्छ्वासः, प्रशस्तविहायोगतिः, अप्रशस्तविहायोगतिः, अपर्याप्तं, प्रत्येकं, स्थिरं, अस्थिरं, शुभं, अशुभं, दुर्भगं, सुस्वरं, दुःस्वरं, अनादेयं, अयशःकीर्तिः, निर्माणम्। बाह्ये च द्वे अन्यतरवेदनीये नीचैर्गोत्राख्ये क्षीणे तीर्थकराऽयोगकेवलिनश्चरमसमये द्वादश क्षीणाः—अन्यतरवेद्यं, उच्चैर्गोत्रं, मनुष्यायुः, नव च नामप्रकृतयः। तद्यथा—मनुष्यगति-पञ्चेन्द्रियजाति-त्रस-बादर-पर्याप्त-सुभगा-ऽऽदेय-यशःकीर्ति-तीर्थकराख्याः। अतीर्थकराऽयोगकेवलिनस्तु चरमसमये एता एवैकादश क्षीणाः तीर्थकरनामवर्जाः। मनुष्यायुश्चैकमेव बद्धं, न शेषाणीत्येकमेव गण्यते। एवं **तत्क्षयसमकालमेव**—सकलकर्मक्षयतुल्यकालमेव **औदारिकशरीरवियुक्तस्यास्य मनुष्यजन्मनः प्रहाणम्**—उच्छेदः। **बन्धहेत्वभावाच्चोत्तरजन्मनोऽप्रादुर्भावः।** एषाऽवस्थितिः पूर्वजन्मन उच्छेद उत्तरजन्माप्रादुर्भावः। केवल आत्मा ज्ञानाद्युपयोगलक्षणः शुद्धः, इत्येषाऽवस्था **कृत्स्नकर्मक्षयलक्षणो मोक्ष** इत्याख्यायते। अवस्थाग्रहणमात्मानुच्छेदप्रतिपादनार्थमिति ॥ ३ ॥

कस्मिन् गुणस्थाने कस्याः प्रकृतेः क्षयः ?

**किञ्चान्यदित्यनेन** तस्यामवस्थायां प्रष्टव्यशेषमाशङ्कते—"औपशमिक-क्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च" (अ० २, सू० १) इत्युक्तं जीवस्वतत्त्वम्। तत् किं तस्यामवस्थायां सकलमेव परिशटति उत नैव क्षीयते किञ्चित् आहोस्वित् किञ्चन परिशटति किञ्चिन्नेति सन्देहापनयनार्थमाह सूत्रकारः—

## सूत्रम्—औपशमिकादिभव्यत्वाभावाच्चान्यत्र केवलसम्यक्त्व-ज्ञान-दर्शन-सिद्धत्वेभ्यः ॥ १०–४ ॥

---

१ 'रिकशरीर' इति ङ-पाठः। २ 'तरवेद्यं' इति ङ-पाठः। ३ 'सुभगोदय' इति ङ-पाठः। ४ 'गम्यते' इति ङ-पाठः।

टी०—[1]उपशमे भवः उपशमेन वा निर्वृत्तः औपशमिकः, स आदिर्येषां ते इमे औपशमिकादयः। आदिग्रहणेन क्षायिक-क्षायोपशमिकौ-दयिक-पारिणामिका गृहीताः। सेत्स्यल्लक्षणं भव्यत्वं औपशमिकादयश्च भव्यत्वं च औपशमिकादिभव्यत्वानि। एषामभावः **औपशमिकादिभव्यत्वाभावः**। चशब्दः समुच्चये। औपशमिकाद्यभावाद् भव्यत्वाभावाच्च मुक्तात्मा भवति। किं सर्वेषामौपशमिकादीनामभावः?। तदुच्यते-**अन्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः** [2]शेषा न सन्ति। औपशमिक-क्षायोपशमिकौ-दयिकाः सर्वथा न सन्त्येव। क्षायिके तु भावे केवलसम्यक्त्वं, क्षायिकसम्यक्त्वमित्यर्थः। केवलज्ञानं केवलदर्शनं सिद्धत्वं च सम्भवति मुक्तात्मनि। पारिणामिके तु भावे भव्यत्वमेव केवलं सिद्धे न सम्भवति। तच्चौपशमिकादिग्रहणाद् भव्यत्वं सङ्गृहीतमेव, किमर्थं पुनर्भव्यत्वग्रहणम्? उच्यते—पारिणामिकभावे भव्यत्वमेव केवलं सिद्धे न समस्ति, शेषाः पारिणामिकाः प्रायेण सन्तीति ज्ञापनार्थम्। अस्तित्व-गुणवत्त्वा-ऽनादित्वा-ऽसङ्ख्येयप्रदेशवत्त्व-नित्यत्वादयः सन्त्येव। एतदनुसारिभाष्यम्—

**भा०—औपशमिक-क्षायोपशमिकौ-दयिक-पारिणामि[3]कानां भावानां भव्यत्वस्य चाभावान्मोक्षो भवति अन्यत्र केवलसम्यक्त्व-केवलज्ञान-केवलदर्शन-सिद्धत्वेभ्यः। एते ह्यस्य क्षायिका नित्यास्तु मुक्तस्यापि भवन्ति ॥ ४ ॥**

टी०—**औपशमिकेत्यादि**। औपशमिकादयः कृतद्वन्द्वाः षष्ठीबहुवचनेन निर्दिष्टाः। एषामभावाद् भव्यत्वाभावाच्च **मोक्षः**। अन्यत्र केवलसम्यक्त्वादिभ्यः इत्युपपदलक्षणा पञ्चमी। दर्शनसप्तकक्षयात् क्षायिकं [4]केवलसम्यक्त्वं, समस्तज्ञानावरणक्षयात् क्षायिकं केवलज्ञानं अशेषदर्शनावरणक्षयात् क्षायिकं केवलदर्शनं, समस्तकर्मक्षयात् सिद्धत्वमित्येते **क्षायिका** भावा यस्मान्नित्यास्तस्मान्मुक्तस्यापि भवन्तीति ॥ ४ ॥

स पुनर्मुक्तात्मा यत्र मुक्तः समस्तकर्मभिः किं तत्रैवावतिष्ठते उतान्यत्रेति पृष्टे जगाद—

## सूत्रम्—तदनन्तरमूर्ध्वं गच्छत्या लोकान्तात् ॥ १०–५ ॥

**भा०—तदनन्तरमिति कृत्स्नकर्मक्षयानन्तरं औपशमिकाद्यभावानन्तरं चेत्यर्थः। मुक्त ऊर्ध्वं गच्छत्या लोकान्तात्। कर्मक्षये देहवियोग-सिध्यमानगति-लोकान्तप्राप्तयो [5]ह्यस्य युगपदेकसमयेन भवन्ति।**

टी०—तच्छब्देन कृत्स्नकर्मक्षयः परामृश्यते औपशमिकादिभव्यत्वाभावो वा। **तदनन्तरमिति** कृत्स्नकर्मक्षयानन्तरं अनु सन्ततमेव मुक्तः सन्नूर्ध्वमेव **गच्छति**। कियतीं

---

१ 'उपशमनेन' इति ग-पाठः। २ 'सिद्धा न सन्ति' इति ङ-पाठः। ३ 'कादीनां' इति ग-पाठः। ४ 'केवलदर्शनं' इति ङ-पाठः। ५ 'ऽस्य' इति घ-पाठः।

भूमिमित्याह—**आ लोकान्तात्** पञ्चास्तिकायसमुदायो लोकः तस्यान्तो-मस्तकः, ईषत्-प्राग्भारा नाम क्षोणी तुहिनसकलधवला उत्तानकच्छत्रकाकृतिः। तस्याश्चोपरि योजनमेकं लोकः, तस्याधस्तनक्रोशत्रयं हित्वा तुरीयक्रोशस्य उपरितनके षड्भागे त्रयस्त्रिंशदुत्तरधनुस्त्रिशतीसम्मिते धनुस्त्रिभागाधिके लोकान्तशब्दो वर्तते। आङो मर्यादायां प्रयोगः आ उदकान्तादिति यथा, एवमा लोकान्ताद् गच्छति, न ततः परमिति। तस्य च मुक्तात्मनो **देह-वियोगः** सर्वात्मना तैजस-कार्मणयोः क्षयः। **सिध्यमानगतिरिति** ताच्छील्ये वाऽनङ् सेधनशील एवासौ नान्यशीलोऽवश्यमेव सिध्यति तस्य गतिरितो गमनं मुक्तस्य सतः **लोकान्त-प्राप्तिः**—लोकान्तेऽवस्थानं एतत्त्रितयमप्येकेन **समयेन** परमनिरुद्धेन कालविशेषेण **युगपद् भवति**। गतिश्च समयान्तरं प्रदेशान्तरं वाऽस्पृशन्ती भवति। तस्य अचिन्त्यसामर्थ्याच्चैतत् सर्वं युगपद् भवति। देहवियोगादि केचिदाहुः कर्मक्षयकालश्च देहवियोगादिसमकाल एव भवतीति।

मतान्तरम्

**भा०—तद्यथा—प्रयोगपरिणामादिसमुत्थस्य गतिकर्मण उत्पत्तिकार्यारम्भविनाशा युगपदेकसमयेन भवन्ति तद्वत्॥ ५॥**

**टी०—तद्यथेत्यादिना** दृष्टान्तयति—प्रसिद्धेन दृष्टान्तवस्तुना सिद्धस्य उत्पादादीनामेककालता साध्यते। प्रयोगो वीर्यान्तरायक्षयोपशमात् क्षयाद् वा चेष्टास्वरूपः परिणामः **प्रयोग-परिणामः**। आदिग्रहणात् स्वाभाविको वा। परमाण्वादीनां गतिपरिणामस्तत्**समुत्थस्य**—तस्माज्जातस्य **गतिकर्मणो**—गतिक्रियाविशेषस्य कार्यद्वारेणोत्पत्तिकालः **कार्यारम्भश्च** कारण**विनाशश्च** पर्यायान्तरेण द्व्यणुकादिकार्यारम्भः पूर्वपर्यायेण विनाशस्तद्वत् सिद्धस्यापि कर्मक्षयदेहवियोगादयः समकाला **एकसमयेन भवन्तीत्यर्थः**। उत्पादविगमस्थानवदिति सुज्ञानम्॥ ५॥

**भा०—अत्राह—प्रहीणकर्मणो निरास्रवस्य कथं भवतीति?। अत्रोच्यते—**

**टी०—अत्राहेत्यादि** सूत्रं सम्बध्नाति। **प्रहीणकर्मण** इति क्षपितनिरवशेषकर्मराशेः **निरास्रवस्य**—निरस्तकायवाङ्मनोयोगस्य **कथं**—केन प्रकारेण गतिः—लोकान्तप्राप्तिर्भवति। एवं मन्यते—योगाभावात् स तदा निष्क्रियोऽगतिश्च (अ)क्रियातो लोकान्तगमनमनुपपन्नमिति प्रश्नयति। **अत्रोच्यते**—यथा गमनं समस्ति मुक्तात्मनस्तथोच्यते—

---

१ 'तद्देश' इति ङ-पाठः। २ 'कच्छपाकृतिः' इति ङ-पाठः। ३ 'अत्रोदकान्ता०' इति ङ-पाठः, 'अत्रेदं कान्ता' इति तु च-ज-पाठः। ४ 'विनाशस्थान' इति ग-पाठः। ५ 'लोकगमन' इति ङ-पाठः।

मुक्तेर्गमने हेतवः

## सूत्रम्—पूर्वप्रयोगाद्, असङ्गत्वाद्, बन्धच्छेदात्, तथा-गतिपरिणामाच्च तद्गतिः ॥ १०–६ ॥

**भा०—पूर्वप्रयोगात्। यथा हस्तदण्डचक्रसंयुक्तसंयोगात् पुरुषप्रयत्नतश्चाविद्धं कुलालचक्रमुपरतेष्वपि पुरुषप्रयत्नहस्तदण्डचक्रसंयोगेषु पूर्वप्रयोगाद् भ्रमत्येवा संस्कारपरिक्षयात्।**

टी०—उपरतकर्तृव्यापाराद् यथा कुलालचक्रं '**हस्तदण्डचक्रसंयुक्तसंयोगात्**' हस्तेन दण्डः संयुक्तः, दण्डेन चक्रं संयुक्तं संयुक्तसंयोगः तस्मात् **पुरुषप्रयत्नतश्च**—पुरुषपरिस्पन्दाच्च **आविद्धं**—वेगितं प्रेरितं **उपरतेष्वपि** पुरुषव्यापारादिषु **पूर्वप्रयोगात्** हस्तादिव्यापारप्रेरणाद् **भ्रमत्येव आ संस्कारपरिक्षयात्**। संस्कारः—अनवरतक्रियाप्रबन्धः। दृष्टान्तेन दार्ष्टान्तिकमर्थं समीकुर्वन्नाह—

**भा०—एवं यः पूर्वमस्य[2] यत्कर्मणा प्रयोगो जनितः स क्षीणेऽपि कर्मणि गतिहेतुर्भवति। तत्कृता गतिः। किञ्चान्यत्—**

टी०—**एवं यः पूर्वमस्ये**त्यादि। योगनिरोधाभिमुखस्य[3] **यत्** कर्म—क्रिया तेन **कर्मणा यः प्रयोगो जनितः स क्षीणेऽपि कर्मणि** अविच्छिन्नसंस्कारत्वात् योगाभावेऽपि **गतिहेतुर्भवति**। तेन हेतुना क्रियते **गतिरित्यर्थः**। **किञ्चान्यदिति** द्वितीयं हेत्वन्तरमुपन्यस्यति—

**भा०—असङ्गत्वात्। पुद्गलानां जीवानां च गतिमत्त्वमुक्तं, नान्येषां द्रव्याणाम्। तत्राधोगौरवधर्माणः पुद्गलाः, ऊर्ध्वगौरवधर्माणो जीवाः। एष स्वभावः।**

टी०—**असङ्गत्वादिति**। सङ्गः—स्खलनं तद्भावः सङ्गत्वं, स्खलितत्वमित्यर्थः। न सङ्गत्वमसङ्गत्वम्—अस्खलितत्वं तस्मादसङ्गत्वात् सिद्धस्योर्ध्वं गतिः सिद्धा। न हि स्वाभाविक्या गत्या गच्छन्नूर्ध्वं क्वचित् स्खलनमासादयति। एतद्व्याख्यानायाह—**पुद्गलानामित्यादि**। पूरणाद् गलनाच्च पुद्गलाः—परमाण्वप्रभृतयः। जीवास्तु ज्ञानदर्शनोपयोगलक्षणाः। एषां पुद्गलजीवानां **गतिमत्त्वमुक्तं, नान्येषां**—धर्माधर्माकाशद्रव्याणाम्। तत्र स्वभावत एव **अधः**—अधस्तात् **गौरवं** भारिकत्वं, परिणामविशेषः। गौरवं धर्मो येषां ते **गौरवधर्माणः पुद्गलाः ऊर्ध्वगौरवधर्माणो जीवा इति**। जीवानामपि तादृशं गौरवं परिणामविशेषो लाघवं येषामिति। एवंविधं तेषां गौरवं विशिष्टं येनोर्ध्वं गच्छन्ति एषां(प?) पुद्गलानां च **स्वभावः**।

१ 'चक्रसंयोगात्' इति ग-पाठः। २ 'मस्य कर्मणा' इति घ-पाठः। ३ 'मिल्यस्य' इति च-पाठः।
४ 'गतित्व' इति ग-पाठः।

भा०—अतोऽन्यासङ्गादिजनिता गतिर्भवति। यथा सत्स्वपि प्रयोगादिषु गतिकारणेषु जातिनियमेनाधस्तिर्यगूर्ध्वं च स्वाभाविक्यो लोष्टवायुवग्नीनां गतयो दृष्टास्तथा सङ्गविनिर्मुक्तस्योर्ध्वगौरवादूर्ध्वमेव सिध्यमानगतिर्भवति। संसारिणस्तु कर्मसङ्गादधस्तिर्यगूर्ध्वं च। किञ्चान्यत्—

टी०—अतोऽन्येति स्वाभाविकीं गतिमपहाय सङ्गादिजनिता गतिर्भवति। सङ्गः–कर्मकृतं स्खलनम्। आदिग्रहणात् अभिघातप्रेरणादिषु गमनकारणेषु। 'जातिनियमेन' जातिः पृथिव्य-ऽनिला-ऽनलव्यक्तिभेदेन भिन्ना। पृथिवीत्व-वायुत्वा-ऽग्नित्वाख्या तया नियमः क्रियते। तत्र पृथिवीत्वनियमेनाधोगतिर्लोष्टः। यो हि बादरः पृथिवीपरिणामः स सर्वोऽधोगतिः। एवं तिर्यग्गतिर्वायुः। ऊर्ध्वगतिर्दहनः। स्वजातिनियमेनैवमेषामेताः स्वाभाविक्यो गतयो यथा तथा सङ्गविनिर्मुक्तस्य-कर्मकृतस्खलनरहितस्य ऊर्ध्वगौरवात् परिणामविशेषादूर्ध्वमेव सिध्यमानगतिर्भवति। संसारिणस्तु–नरकादिगतिचतुष्टयवर्तिनः संसारे परिभ्रमतः कर्मसङ्गात्–कर्मजनितस्खलनादधस्तिर्यगूर्ध्वं चानियमेन गतिर्भवति॥

किञ्चान्यदिति युक्त्यन्तरोपन्याससूचनम्।

भा०—बन्धच्छेदात्। यथा रज्जुबन्धच्छेदात् पेडाया बीजकोशबन्धनच्छेदाच्चैरण्डबीजादीनां गतिर्दृष्टा तथा कर्मबन्धनच्छेदात् सिध्यमानगतिः॥ किञ्चान्यत—

टी०—बन्धच्छेदादिति। बध्यते येन रज्ज्वादिना स बन्धः। तस्य छेदः शस्त्रेण त्रोटनं वा। तद् व्याचष्टे—यथा रज्ज्वा गाढमापीड्यापीड्य बद्धायाः कीचकविदलघटितायाः रज्जुबन्धच्छेदादुपरितनपुटस्य गमनमूर्ध्वं दृष्टं बीजकोशबन्धच्छेदाच्च बीजकोशः फलीफलं वा तस्यास्तु बन्धनं गाढसम्पुटता सवितृकरजालशोषितायाः परिणतिकाले सम्पुटोद्भेदः छेदः। ततश्च एरण्डादिफलभेदे बीजानां गतिर्दृष्टा। तानि तूड्डीयोड्डीय दूरे पतन्ति तथा कर्मबन्धः फलकडाहस्थानीयस्तच्छेदात्–तद्विघटनादनन्तरमेवोर्ध्वं सिध्यमानगतिरिति॥ किञ्चान्यदिति विवक्षितार्थप्रसाधनाय हेत्वन्तरमुपादत्ते—

भा०—तथागतिपरिणामाच्च। ऊर्ध्वगौरवात् पूर्वप्रयोगादिभ्यश्च हेतुभ्यस्तथाऽस्य गतिपरिणाम उत्पद्यते येन सिध्यमानगतिर्भवति, ऊर्ध्वं नाधस्तिर्यग् वा॥

टी०—तथागतिपरिणामाच्चेति। तथा–तेन प्रकारेण सर्वकर्मविनिर्मुक्तस्यास्य गतिपरिणामो भवति विगतयोगस्यापि। चशब्दः समुच्चये। एभ्यश्च पूर्वोक्तहेतुभ्यः–ऊर्ध्वगौरवात् पूर्वप्रयोगादिभ्यश्च गतिपरिणाम उत्पद्यते येन सिध्यमानगतिर्भवतीति।

---

१ 'वाय्वादीनां' इति ग-पाठः। २ 'संयोगा०' इति ग-पाठः। ३ 'हेम' इति ज-पाठः। ४ 'ऊर्ध्वमेव भवति' इति घ-पाठः।

स च गतिपरिणाम ऊर्ध्वमेव भवति नाधस्तिर्यग् वा। पूर्वाभिहितहेतुनिरपेक्ष ऊर्ध्वगौरवप्रयोगपरिणामाद् विना असङ्गयोगं चान्तरेणेत्यादि। तदाह—

**भा०—गौरवप्रयोगपरिणामासङ्गयोगाभावात्। तद्यथा—गुणवद्भूमिभागारोपितमृतुकालजातं बीजोद्भेदादङ्कुरप्रवालपर्णपुष्पफलकालेषु अविमानितसेकदौर्हृदादिपोषणकर्मपरिणतं कालच्छिन्नं शुष्कमलाबु अप्सु न निमज्जति।**

टी०—**गौरवप्रयोगपरिणामासङ्गयोगाभावादित्यादि।** तद्यथेत्यादिना दृष्टान्तमाह–अलाबुनोऽवस्थाः पूर्विका विशेष्यन्ते। गुणवद्भूमिभागारोपितमिति बीजावस्था। गुणवान् भूमिभागोऽनुपहतः क्षार-मूत्र-पुरीषादिभिः तत्रारोपितं निखातं सत् काले-वर्षासु जातं ततश्चोच्छूनावस्थाद् बीजोद्भेदादङ्कुरः प्रवालं किसलयं पर्णं जरठं ततः पुष्पं ततः फलं एषां बीजारोपणोद्भेदादङ्कुरप्रवालपर्णपुष्पफलानां कालेषु स्वेषु स्वेषु विमानितः प्राप्तकालो न कृतः कृतस्त्वविमानितः सेको दौहृदश्च। आदिग्रहणादस्थि-धूम-भस्मावगुण्ठनादिपरिग्रहः। एवमादिना पोषणकर्मणा परिणतं–जरठीभूतं पक्वं काले परिपाकोत्तरकालच्छिन्नं शुष्कमलाबु अप्सु न निमज्जति—न जलेऽन्तः प्रविशति। सर्वेषां विशेषणानामिदं फलं निरुपहतं वातेनानाश्लिष्टं अशुषिरमिति।

(अलाबुनोऽवस्थाः)

**भा०—तदेव गुरुकृष्णमृत्तिकालेपैर्घनैर्बहुभिरालिप्तं घनमृत्तिकालेपवेष्टनजनितागन्तुकगौरवमप्सु प्रक्षिप्तं तज्जलप्रतिष्ठं[3] भवति। यदा त्वस्याद्भिः क्लिन्नो मृत्तिकालेपो व्यपगतो भवति तदा मृत्तिकालेपसङ्गनिर्मुक्तं मोक्षानन्तरमेवोर्ध्वं गच्छति आ सलिलोर्ध्वतलात्।**

टी०—**तदेव** च पुनर्गुर्व्याः **कृष्णमृत्तिकाया लेपैर्घनैः**–निरन्तरैर्**बहुभिः**–अष्टाभिर्दर्भवेष्टनैः कालमालिप्तः तेन च घनमृत्तिकालेपेन वेष्टनेन च दर्भादिजनितमागन्तुकं गौरवं यस्य तदेवंविधमप्सु प्रक्षिप्तं तज्जलप्रतिष्ठं भवति उत्तरकालम्। यदा त्वस्याद्भिः सम्बन्धतः[6] क्लिन्नो मृत्तिकालेपो व्यपगतो भवति तदा तत्सङ्गविनिर्मुक्तं दर्भादिबन्धनमृत्तिकामोक्षणसमनन्तरमेवोर्ध्वं गच्छत्या सलिलोर्ध्वतलादित्येष दृष्टान्तः।

सम्प्रति दार्ष्टान्तिकं दर्शयति—

**भा०—एवमूर्ध्वगौरवगतिधर्मा जीवोऽप्यष्टविधकर्मलेपमृत्तिकाऽवेष्टितस्तत्सङ्गात् संसारमहार्णवे भवसलिले निमग्नो भवासक्तोऽधस्तिर्यगूर्ध्वं च गच्छति**

१ 'तूना' इति ज-पाठः। २ 'मृत्तिकावेष्टन' इति ग-पाठः। ३ 'तलप्रविष्टं' इति ग-पाठः। ४ 'वेष्टनकाल' इति च-ज-पाठः। ५ 'तलप्रतिष्ठं' इति च-ज-पाठः। ६ 'सम्बन्धेन' इति ग-पाठः। ७ 'मृत्तिकावेष्टितः सन् संसार०' इति ग-पाठः।

**सम्यग्दर्शनादिसलिलक्लेदात् प्रहीणाष्टविधकर्ममृत्तिकालेपः ऊर्ध्वगौरवादूर्ध्वमेव गच्छत्या लोकान्तात् ॥ स्यादेतत् । लोकान्तादूर्ध्वं मुक्तस्य गतिः किमर्थं न भवतीति ? । अत्रोच्यते—**

टी०—**एवमूर्ध्वगौरवे**त्यादि । संसारोदधौ **भवसलिले** भवः–औदारिकादिकायनिर्वृत्तिः । भव एव सलिलं तत्र **मग्नो भवासक्तः** शरीरी अनियमेन अधस्तिर्यगूर्ध्वं च **गच्छति** । ततः **सम्यग्दर्शन**ज्ञानावरण**सलिला**र्द्रीकृत**प्रहीणाष्टविधकर्ममृत्तिकालेपः ऊर्ध्वमेव गच्छति आ लोकान्ता**दिति । **स्यादेत**दित्यादिना इदमाशङ्कते–ऊर्ध्वं गच्छत्या लोकान्तादिति को नियमः ? स्वाभाविक्या गत्या लोकान्तादपि परेण गच्छतु गतेर्निवारकस्याभावादिति । **अत्रोच्यते—**

**भा०—धर्मास्तिकायाभावात् । धर्मास्तिकायो हि जीवपुद्गलानां गत्युपग्रहेणोपकुरुते । स तत्र नास्ति । तस्माद् गत्युपग्रहकारणाभावात् परतो गतिर्न भवत्यप्सु अलाबुवत् । नाधो न तिर्यगित्युक्तम् । तत्रैवानुश्रेणिगतिर्लोकान्तेऽवतिष्ठते मुक्तो निष्क्रिय इति ॥ ६ ॥**

टी०—**धर्मास्तिकायाभावा**दिति । अस्त्येव निवारकं धर्मद्रव्यं तदपेक्षाकारणं स्वयमेव गतिपरिणतस्य जीवपुद्गलद्रव्यस्य धर्मद्रव्यमुपग्राहकं भवति मीनस्येव वारिद्रव्यम्, न त्वगच्छन्तं झषं बलाद् वारि नयति । एवं गतिपरिणतस्यात्मनः पुद्गलस्य वा स्वत एव **गत्युपग्रह**कारी **धर्मास्तिकायः** कारणीभवति । **स** च लोकात् परतो **नास्ति** । **तस्माद् गत्युपग्रहका**रिणोऽ**भावात् परतो गति**र्नास्ति **अप्सु** यथाऽलाबुनः । अलाबु हि मृल्लेपापगमात् स्वयमेव गच्छज्जलमस्तकप्रविष्टं भवति, न परतो याति, उपग्राहकजलद्रव्याभावात् । ऊर्ध्वमेव च प्रयाति, **नाधो न तिर्यगित्युक्त**मेव । **तत्रैवानुश्रेणिगतिर्लोकान्तेऽ**वतिष्ठत इति । यत्र देशे स्थितो मुच्यते समस्तैः कर्मभिस्तत्र या शरीरस्योपरि रुद्धा श्रेणिर्नभसस्तयैव गत्वा लोकान्तेऽवतिष्ठते **मुक्तात्मा निष्क्रिय इति** ॥ यथोक्तम्—

" धर्माभावाच्चालोके स प्रतिहन्यते न लोकाग्रे ॥
[ न तु स्पर्शित्वात् ] गमनोपकृद्धिधर्मो जीवानां पुद्गलानां च ॥ १ ॥
मुक्तोऽनन्तं कालं गच्छत्युपरीति वाऽप्यनुपपन्नम् ।
मुक्तस्य संसृतिर्हि न युक्ता भ्रमणं हि संसारः ॥ २ ॥
संसारिणस्तु विश्रमणमस्ति तस्य न महाननर्थः स्यात् ।
अपि चालोकोऽभीष्टः स च कृतकृत्यस्तथाऽऽत्मवशः ॥ ३ ॥

तिष्ठति सर्वार्थान् सोऽत्यन्तं पश्यंस्तथा विजानंश्च ।
नास्ति स्वभावविगमो न तु सर्वस्यापि भावस्य ॥ ४ ॥
घातीनि तु कर्माणि स्वभावजातान् गुणान् विवृण्वन्ति ।
तदभावात् स्वाभाविकगुणभावो भवति न तु सिद्धः ॥ ५ ॥
यदि च स्वभावविगमो नेष्टः कस्मात् स निष्क्रियो भवति ।
इति वा चोद्यं प्रोक्तं यत्स्पन्दस्तत्स्वभावत्वम् ॥ ६ ॥
कार्याभावाच्च पुनर्न स्पन्दस्तस्य विद्यतेऽत्यन्तम् ।
प्रायोगिकोऽप्ययुक्तः स्पन्दः कर्मप्रमुक्तस्य ॥ ७ ॥
विषयैश्च तस्य नार्थः क्षुत्-तृट्-स्वेदादि-मोहबाधानाम् ।
रागादीनां च तथाऽभावादुपयोगहेतूनाम् ॥ ८ ॥
एतेन व्याख्यातो भाषण-चङ्क्रमण-चिन्तनादीनाम् ।
चेष्टानां सिद्धस्याभावो विशरीरवाङ्मनसः ॥ ९ ॥"

एवं तेषां मुक्तात्मनां "पूर्वप्रयोगादिभिर्युक्तिमद्गतिः" इति वचनात् तेषां गतिः सिद्धेति ॥ ६ ॥

त एते सिद्धान्तज्ञेन सिद्धाः क्षेत्रादिभिर्द्वादशभिरनुयोगद्वारैरनुगन्तव्याः "प्रमाणनयैरधिगमः" (अ०१, सू० ६) इति वचनादित्याह—

सिद्धस्य १२ अनुयोगद्वाराणि

**सूत्रम्—क्षेत्र-काल-गति-लिङ्ग-तीर्थ-चारित्र-प्रत्येक-बुद्धबोधित-ज्ञाना-ऽवगाहना-ऽन्तर-सङ्ख्या-ऽल्पबहुत्वतः साध्याः ॥ १०—७ ॥**

टी०—अथवा अमी सिद्धाः परिनिर्वृत्तदोषाः कार्मणशरीरौपशमिकादिभावनिरुपाख्याः किं पर्यायान्तरेण व्यपदेष्टुमशक्या एव आहोस्विदतीतव्यवहारा एव हि निर्धार्या इति ? ॥ उच्यते—शक्यन्त एव व्यपदेष्टुं, यस्मात् ते खलु व्यवजिहीर्षद्भिः प्रत्युत्पन्नभूतार्थानुग्रहतन्त्रनयद्वितय-सामर्थ्यविशेषवद्भिः श्रुतज्ञानाहितदार्ढ्यैर्ज्ञानदर्शनचरणाप्रच्युतमार्गैस्तत्त्वप्रतिपत्त्यर्थमात्महितमादधानैः क्षेत्रादिद्वारैरनुगमनीया इत्याह—**क्षेत्रकाल** इत्यादि । क्षेत्रादीनां अल्पबहुत्वान्तानां द्वन्द्वः । द्वन्द्वसमासाभिनिर्वृत्ताच्च प्रातिपदिकात् तृतीयार्थे तसिः । सिद्धिविशेषस्यानेकाश्रयत्वात् साध्यवचनम् । क्षेत्रादीनि च द्वादशापि द्वाराणि प्रतिपदं दर्शयति भाष्येण—

**भा०—क्षेत्रं, कालः, गतिः, लिङ्गं, तीर्थं, चारित्रं, प्रत्येकबुद्धबोधितः, ज्ञानं, अवगाहना, अन्तरं, सङ्ख्या, अल्पबहुत्वमित्येतानि द्वादशानुयोगद्वाराणि सिद्धस्य भवन्ति ।**

**टी०**—तत्र क्षेत्रमाकाशं जीवपुद्गलानां निवासगतिविशेषणाल्लोकाकाशपरिग्रहः। तस्यापि लोकाकाशस्यैकदेशग्रहणम्, अर्धतृतीयद्वीपसमुद्रद्वयमीषत्प्राग्भारोपलक्षितश्च गगनप्रदेश इति। कालोऽनादिरनन्तस्तस्योत्सर्पिण्यवसर्पिणी च ग्राह्या। गतिर्नरकादिभेदेन चतुर्विधा। लिङ्गं स्त्री-पुं-नपुंसकाख्यम्, अथवा द्रव्यलिङ्गं भावलिङ्गमलिङ्गमिति। तीर्थमिति तीर्थकरत्वं प्राप्य सिद्धा इत्यादिविकल्पम्। चारित्रं सामायिकादि मूलगुणोत्तरगुणभेदम्। प्रत्येकबुद्धबोधितः स्वयम्बुद्धसिद्धादिभेदः। ज्ञानं मति-श्रुतादिभेदम्। अवगाहनामिति शरीरावगाहग्रहणम्। अन्तरमेकसमयादिकं षण्मासान्तिकम्। सङ्ख्येत्येकस्मिन् समये कियन्तः सिध्यन्तीत्यादि। अल्पबहुत्वमिति क्षेत्रसिद्धाद्यन्तःपातिभेदानां परस्परं चिन्त्यते। एतानि द्वादशानुयोगद्वाराणि सिद्धस्य सिद्धत्वलाभे कारणानि भवन्ति। एतदेव स्पष्टयति—

**भा०—एभिः सिद्धः साध्यः अनुगम्यश्चिन्त्यो व्याख्येय इत्येकार्थत्वम्। तत्र पूर्वभावप्रज्ञापनीयः प्रत्युत्पन्नभावप्रज्ञापनीयश्च द्वौ नयौ भवतः। तत्कृतोऽनुयोगविशेषः।**

**टी०**—साध्यपर्यायानाचष्टे-अनुगमनीयोऽनुगम्योऽनुसर्तव्योऽनुसृत्यः। चित्ते व्यवस्थाप्यश्चिन्त्यः व्यवस्थाप्य च व्याख्येयः-कथनीयः। एकस्य-अभिन्नस्यार्थस्य वाचकाः सर्व एते साध्यादयः। अत एव पर्यायत्वं युगपदप्रयोगात्। तत्र-अस्मिन् सिद्धव्याख्याने कर्तव्ये द्वौ नयौ पूर्वभावप्रज्ञापनीयः प्रत्युत्पन्नभावप्रज्ञापनीयश्च। पूर्वम्-अतीतं भावं प्रज्ञापयतीति पूर्वभावप्रज्ञापनीयः। प्रत्युत्पन्नं-वर्तमानं भावं प्रज्ञापयतीति प्रत्युत्पन्नभावप्रज्ञापनीयः। नैगमादिप्रसिद्धनयेभ्यश्च नेमौ व्यतिरिक्तौ। एतेषामेव वाचोयुक्तिभेदेन ग्रहणम्। तत्र नैगमसङ्ग्रह-व्यवहाराः सर्वकालार्थग्राहित्वात् पूर्वभावप्रज्ञापनीयशब्दवाच्याः। ऋजुसूत्र-शब्द-समभिरूढैवम्भूतास्तु वर्तमानकालार्थप्रतिग्राहित्वात् प्रत्युत्पन्नभावप्रज्ञापनीयशब्दवाच्या विज्ञेयाः। आभ्यां नयाभ्यां क्षेत्रादयो व्याख्येयाः। तत्कृतः-ताभ्यां कृतोऽनुयोगविशेषो-व्याख्याप्रकारः॥

**भा०—तद्यथा—कस्मिन् क्षेत्रे सिध्यतीति। प्रत्युत्पन्नभावप्रज्ञापनीयं प्रति सिद्धिक्षेत्रे [1]सिध्यतीति। पूर्वभावप्रज्ञापनीयस्य जन्म प्रति पञ्चदशसु कर्मभूमिषु जातः [2]सिध्यतीति। संहरणं प्रति मानुषे क्षेत्रे [3]सिध्यतीति। तत्र प्रमत्तसंयताः संयतासंयताश्च संह्रियन्ते॥**

**टी०**—तद्यथेत्यादिना क्षेत्रं निरूपयति—**कस्मिन् क्षेत्रे सिध्यति**। तत्र **प्रत्युत्पन्नभावप्रज्ञापनीयस्य सिद्धिक्षेत्रे सिद्ध्यतीति**। तत्र सिद्धः [4]प्रतिष्ठितः। तथा चागमः—"[5]इहं बोंदिं चइत्ता णं तत्थ गंतूण सिज्झई"। अप्राप्तस्थानस्तु नैव सिद्धः, [6]कृत्यशेषत्वात्।

---

१-३ 'सिध्यति' इति घ-पाठः। ४ 'प्रतिष्ठितो यः' इति च-ज-पाठः। ५ आवश्यक-निर्युक्तेः ९५९-तमीगाथाया अयमुत्तरार्धः, एतत्पूर्वार्धश्छायापूर्वको यथा—

"अलोए पडिहया सिद्धा, लोअग्गे अ पइट्ठिआ।"

अलोके प्रतिहताः सिद्धा लोकाग्रे च प्रतिष्ठिताः। इह तनुं त्यक्त्वा तत्र गत्वा सिध्यन्ति॥

६ 'कृत्यं' इति च-ज-पाठः।

पूर्वभावप्रज्ञापनीयस्य जन्मप्रतिपन्नजातः कर्मभूमिषु पञ्चसु भरतेषु पञ्चस्वैरावतेषु पञ्चसु विदेहेषु सिध्यति। संहरणं प्रति मानुषक्षेत्रे सिध्यति। संहरणं द्विधा—स्वकृतं परकृतं च। तत्र स्वकृतं चारणानां विद्याधराणां चेच्छातो विशिष्टस्थानाश्रयणम्। परकृतं चारण-विद्याधर-देवैः प्रत्यनीकतयाऽनुकम्पया चोत्क्षिप्यान्यत्र क्षेपणं संहरणम्। तच्च न सर्वस्यैव साधोः संहरणं समस्तीत्येतद् विवेकेन दर्शयति —तत्र प्रमत्तसंयताः संयतासंयताश्च-देशविरताः संह्रियन्ते। केचिदाहुरविरतसम्यग्दृष्टिरपीति। अमी पुनर्न जातुचित् संह्रियन्ते—

संहरणस्य द्वैविध्यम्

मतान्तरम्

श्रमण्यादिसप्तानां संहरणाभावः

**भा०—श्रमण्यपगतवेदः परिहारविशुद्धिसंयतः पुलाकोऽप्रमत्तश्चतुर्दशपूर्वी आहारकशरीरीति[1] न संह्रियन्ते—**

**टी०—श्रमणी** संयतीत्यर्थः। **अपगतवेदः परिहारविशुद्धिसंयत** उक्तलक्षणः तथा **पुलाकसंयतः अप्रमत्तसंयतः चतुर्दशपूर्वधरः आहारकशरीरीति**। एते सप्तापि न **संह्रियन्ते**। आगमोऽपि—

"[2]समणीमवगयवेदं परिहारपुलागमप्पमत्तं च।
चोद्दसपुव्विं आहारगं च णवि कोवि संहरइ॥"[3]

**भा०—ऋजुसूत्रनयः शब्दादयश्च त्रयः प्रत्युत्पन्नभावप्रज्ञापनीयाः शेषा नया उभयभावं प्रज्ञापयन्तीति।**

**टी०—ऋजुसूत्रनयः शब्दादयश्च त्रयः**—शब्द-समभिरूढै-वम्भूताः **प्रत्युत्पन्नभावप्रज्ञापनीयाः**—वर्तमानार्थग्राहिणः। **शेषा**—नैगमादयो नया **उभयभावं प्रज्ञापयन्त्य**तीतं वर्तमानं चेति कालत्रयाभ्युपगमादिति॥

**भा०—कालः। अत्रापि नयद्वयम्। कस्मिन् काले सिध्यतीति?। प्रत्युत्पन्नभावप्रज्ञापनीयस्य अकाले सिध्यति। पूर्वभावप्रज्ञापनीयस्य जन्मतः संहरणतश्च। जन्मतोऽवसर्पिण्युत्सर्पिण्यामनवसर्पिण्युत्सर्पिण्यां च जातः सिध्यति। एवं तावद्-विशेषतः। विशेषतोऽप्यवसर्पिण्यां सुषमदुःषमायां सङ्ख्येयेषु वर्षेषु शेषेषु जातः सिध्यति, दुःषमासुषमायां सर्वस्यां सिध्यति, दुःषमसुषमायां जातो दुःषमायां सिध्यति, न तु दुःषमायां जातः सिध्यति, अन्यत्र नैव सिध्यति। संहरणं प्रति सर्वकालेषु अवसर्पिण्यामुत्सर्पिण्यामनवसर्पिण्युत्सर्पिण्यां च सिध्यति॥**

---

१ 'इति' इति न्यूनो ग-पाठः।

२ छाया—

श्रमणीमपगतवेदं परिहारं पुलाकमप्रमत्तं च।
चतुर्दशपूर्विणमाहारकं च नापि कोऽपि संहरति॥

३ प्रवचनसारोद्धारे १४१९तमीगाथारूपेणोद्धृतेयम्।

टी०—काल इति। अत्रापि तदेव नयद्वयम्। कस्मिन् काले सिध्यतीति ?। तत्र प्रत्युत्पन्नभावप्रज्ञापनीयस्य अकाले-अविद्यमानकाले ईषत्प्राग्भारोपलक्षितगगनदेशे सिध्यति। न च तत्र कालः समस्ति गतश्च तत्र सिध्यति। इतरस्य तु जन्मतः संहरणतश्च। तत्र जन्मतोऽवसर्पिण्यादिषु त्रिष्वपि जातः सिध्यति। एवं तावदविशेषतः, सामान्येनेत्यर्थः। विशेषतस्तु अवसर्पिण्यां सुषमदुःषमायां—तृतीये कालभागे सङ्ख्येयेषु वर्षेषु शेषेषु जातः सिध्यति। दुःषमसुषमायां सर्वस्यां—चतुर्थे कालविभागे सर्वत्र सिध्यति। दुःषमसुषमायां जातो दुःषमायां—पञ्चमे कालविभागे सिध्यति, न तु दुःषमायां जातः कदाचित् सिध्यतीति। अन्यत्रोत्पत्तिः दुःषमायामपि जातो नैव सिध्यति। संहरणं प्रति विवक्ष्यते यदा तदा सर्वकालेष्ववसर्पिण्यादिष्वपि सिध्यतीति॥

भा०—गतिः। प्रत्युत्पन्नभावप्रज्ञापनीयस्य [3]सिद्धिगत्यां सिध्यति। शेषास्तु नया द्विविधाः—अनन्तरपश्चात्कृतगतिकश्च एकान्तरपश्चात्कृतगतिकश्च। अनन्तरपश्चात्कृतगतिकस्य मनुष्यगत्यां सिध्यति। एकान्तरपश्चात्कृतगतिकस्याविशेषेण सर्वगतिभ्यः सिध्यति॥

टी०—गतिद्वारे प्रत्युत्पन्नभावप्रज्ञापनीयस्य सिद्धगत्यां सिद्ध्यति, नान्यस्यां गतौ। शेषास्त्रिकालविषया नया द्विप्रकाराः। अनन्तरपश्चादित्यादि। अनन्तरा पश्चात् कृता गतिर्येषां तेऽनन्तरपश्चात्कृतगतिकास्तेषां मनुष्यगत्यां सिध्यति। एकान्तरेत्यादि। एकान्तराः पश्चात्कृता गतयो येन तस्याप्यविशेषेण सर्वगतिभ्यः सिध्यति। एकमनुष्यगत्या अन्तरिताः-पश्चात्कृता नरकगतयो येनेत्यर्थः॥

भा०—लिङ्गम्। स्त्री-पुं-नपुंसकानि। प्रत्युत्पन्नभावप्रज्ञापनीयस्यावेदः सिध्यति। पूर्वभावप्रज्ञापनीयस्य अनन्तरपश्चात्कृतगतिकस्य परम्परपश्चात्कृतगतिकस्य च त्रिभ्यो लिङ्गेभ्यः सिध्यति॥

टी०—लिङ्गं स्त्र्यादि। तत्र प्रत्युत्पन्नभावप्रज्ञापनीयस्य अवेदो-विगतलिङ्गः सिध्यति। लिङ्गं वेद इत्येकोऽर्थः। पूर्वभावप्रज्ञापनीयस्य तु अनन्तरपश्चात्कृतगतिकस्य। अनन्तरपश्चात्कृतलिङ्गस्येत्यर्थः। गतौ चतुर्विधायां नियमेन लिङ्गं, लिङ्गे चावश्यम्भाविनी गतिरिति लिङ्गशब्दो नोच्चरितः, अविनाभावात्। यदेवानन्तरं पुंलिङ्गं स्त्रीलिङ्गं नपुंसकलिङ्गं वा एकमेव। एकान्तरपश्चात्कृतगतिकश्चेत्यत्रापि गतिशब्दो लिङ्गवाची। एकेनान्तरेण लिङ्गेन पश्चात्कृतानि शेषलिङ्गानि येन तस्य त्रिभ्यो लिङ्गेभ्यः सिध्यति॥

---

१ 'गगन' इति ग-पाठः। २ 'प्रसंहरणं' इति च-ज-पाठः। ३ 'सिद्धगत्यां' इति घ-टी-पाठः।

**भा०—तीर्थम् । सन्ति तीर्थकरसिद्धाः तीर्थकरतीर्थे नोतीर्थकरसिद्धास्तीर्थकरतीर्थे अतीर्थकरासिद्धाः तीर्थकरतीर्थे । एवं तीर्थकरीतीर्थे सिद्धा अपि ॥**

टी०—**तीर्थमिति** । अत्र **सन्ति**—विद्यन्ते **तीर्थकरसिद्धाः** तीर्थकरनामकर्मानुभवपूर्वकाः सिद्धाः तीर्थकरसिद्धाः । ते च **तीर्थकरतीर्थे** तीर्थकरेण प्राक् प्रवर्तितं तीर्थं तस्मिन् सति पुनः स एव तीर्थस्य प्रवर्तयिता तीर्थकरः सिध्यति । **नोतीर्थकरसिद्धाः** प्रत्येकबुद्धाः । ते च **तीर्थकरतीर्थे** । **अतीर्थकरसिद्धाः** साधवः **तीर्थकरतीर्थे** । एवम्—उक्तेन प्रकारेण **तीर्थकरीतीर्थसिद्धा अपि** वाच्याः । तीर्थकरीतीर्थतस्तीर्थकरी सिध्यतीत्यादि । **सिद्धप्राभृते** अमी विकल्पाः—"[2]अत्थि तित्थकरसिद्धा तित्थकरतित्थे नोतित्थसिद्धा तित्थकरतित्थे तित्थसिद्धा तित्थकरतित्थे तित्थसिद्धाओ तित्थकरीसिद्धा तित्थकरीतित्थे नोतित्थसिद्धा तित्थकरीतित्थे तित्थसिद्धा तित्थकरीतित्थे तित्थसिद्धाओ" । अत्र तत्त्वविदः प्रवचनाभिज्ञाः ॥

**भा०—लिङ्गे पुनरन्यो विकल्प उच्यते-द्रव्यलिङ्गं भावलिङ्गं अलिङ्गमिति । प्रत्युत्पन्नभावप्रज्ञापनीयस्यालिङ्गः सिध्यति । पूर्वभावप्रज्ञापनीयस्य भावलिङ्गं प्रति स्वलिङ्गे सिध्यति । द्रव्यलिङ्गं त्रिविधं—स्वलिङ्गमन्यलिङ्गं गृहिलिङ्गमिति । तत् प्रति भाज्यम् । सर्वस्तु भावलिङ्गं प्राप्तः सिध्यति ॥**

टी०—**लिङ्गे पुनरन्यो विकल्प उच्यते** ॥ ननु च पूर्वमेवोपन्यसनीयः स्यात् । सत्यमेव क्षम्यतामिदमेकमाचार्यस्य । त्रिप्रकारं लिङ्गं—**द्रव्यलिङ्गं भावलिङ्गमलिङ्गमिति**, तीर्थोपाधिकत्वात् वृत्तौ त्रय एव विकल्पाः । तत्र **प्रत्युत्पन्न**ग्राहिणो नयस्य शुद्धस्य अलिङ्ग एव **सिध्यति** तदा तु द्रव्यलिङ्गं न सम्भवत्येव । **द्रव्यलिङ्गं त्रिविधं** रजोहरणमुखवस्त्रिकाचोलपट्टकादि **स्वलिङ्गम्** । **अन्यलिङ्गं** भौतपरिव्राजकादिवेषः । **गृहिलिङ्गं** दीर्घकेश-कच्छा-बन्धादि । तदेवंविधं द्रव्यलिङ्गं **भाज्यम्**-कदाचित् सलिङ्गः कदाचिदलिङ्ग इति । भावलिङ्गं श्रुतज्ञानक्षायिकसम्यक्त्वचरणानि । तत्र किञ्चिदनुयायि किञ्चिन्निवर्तते, श्रुतं नास्ति सिद्धे क्षायिकसम्यक्त्वं तु विद्यते । चरणमपि सामायिकादि आवर्तत एव । **पूर्वभावप्रज्ञापनीयस्य भावलिङ्गं प्रति** । श्रुतादिकं स्वलिङ्गं तत्रस्थः सिध्यति । सङ्क्षेपतस्तु **सर्वो भावलिङ्गं प्राप्तः सिध्यतीति** नियमः ॥

आचार्यस्य स्खलना

---

१ 'व्याख्याताः' इति ग-पाठः ।

२ छाया—

अस्ति तीर्थकरसिद्धास्तीर्थकरतीर्थे नोतीर्थसिद्धास्तीर्थकरतीर्थे तीर्थसिद्धास्तीर्थकरतीर्थे तीर्थसिद्धास्तीर्थकरीसिद्धाः तीर्थकरीतीर्थे नोतीर्थसिद्धाः तीर्थकरीतीर्थे तीर्थसिद्धास्तीर्थकरीतीर्थे तीर्थसिद्धाः ।

**भा०—चारित्रम् । प्रत्युत्पन्नभावप्रज्ञापनीयस्य नोचारित्री नोअचारित्री [1]सिध्यतीति ।[2]**

**टी०—चारित्रमिति।** वर्तमानग्राहिणो नयस्य **नोचारित्री नोअचारित्री सिध्यति।** नोशब्दः सर्वप्रतिषेधे। नास्त्यस्य चारित्रं सामायिकादि नोअचारित्री द्वौ प्रतिषेधौ। तत्र चारित्र्येव गम्यते किं तर्हि अचारित्री [3]अविरत इत्यपि वक्तुं न शक्यते। तस्मान्न विरतो नाविरत इति ॥

**भा०—पूर्वभावप्रज्ञापनीयो द्विविधः—अनन्तरपश्चात्कृतिकश्च परम्परपश्चात्कृतिकश्च। अनन्तरपश्चात्कृतिकस्य यथाख्यातसंयतः सिध्यति। परम्परपश्चात्कृतिकस्य व्यञ्जितेऽव्यञ्जिते च। अव्यञ्जिते त्रिचारित्रपश्चात्कृतः चतुश्चारित्रपश्चात्कृतः पञ्चचारित्रपश्चात्कृतश्च। व्यञ्जिते सामायिक-सूक्ष्मसं[4]म्पराय-यथाख्यातपश्चात्कृतसिद्धाः छेदोपस्थाप्य-सूक्ष्मसम्पराय-यथाख्यातपश्चात्कृतसिद्धाः सामायिक-च्छेदोपस्थाप्य-सूक्ष्मसम्पराय-यथाख्यातपश्चात्कृतसिद्धाः छेदोपस्थाप्य-परिहार-विशुद्धि-सूक्ष्मसम्पराय-यथाख्यातपश्चात्कृतसिद्धाः सामायिक-च्छेदोपस्थाप्यपरि-हारविशुद्धि-सूक्ष्मसम्पराय-यथाख्यातपश्चात्कृतसिद्धाः ॥**

**टी०—पूर्वभावप्रज्ञापनीयो** द्विधा। अनन्तरस्य पश्चात्कृतिः-पश्चात्करणं यत्रासावनन्तरपश्चात्कृतिको नयः। अस्य तु **यथाख्यातचारित्री सिध्यति।** इतरस्य व्यञ्जिते-व्यक्तिमापादिते स्पष्टीकृते विशेषिते अव्यञ्जिते सामान्यमात्रे अविशेषिते वक्तव्यं तत्राव्यञ्जिते **त्रिचतुःपञ्चचारित्रपश्चात्कृतः** सिध्यति। कानि त्रीणि चारित्राणि चत्वारि पञ्च वा? । अतो व्यज्यते—सामायिकं, सूक्ष्मसम्परायं, यथाख्यातं च; अथवा छेदोपस्थाप्यं सूक्ष्मसम्परायं यथाख्यातमिति त्रिचारित्रस्य विकल्पद्वयम्। चतुश्चारित्रस्यापि विकल्पद्वयमेव सुज्ञानम्। पञ्चचारित्रस्यैक एव विकल्पः ॥

**भा०—प्रत्येकबुद्धबोधितः। अस्य व्याख्या—विकल्पश्चतुर्विधः। तद्यथा—**

प्रत्येकबुद्धबोधितस्य व्याख्यायाश्चातुर्विध्यम्

**अस्ति स्वयम्बुद्धः। स द्विविधः-अर्हंश्च तीर्थकरः प्रत्येकबुद्धसिद्धश्च। बुद्धबोधित[5]सिद्धः त्रिचतुर्थो विकल्पः। परबोधकसिद्धाः स्वेष्टकारिसिद्धाः ॥**

**टी०—प्रत्येकबुद्धबोधित** इति चतुर्धा व्याख्यायते—तीर्थकरः प्रत्येकबुद्धः परबोधकः स्वेष्टकारी चेति। **तद्यथेत्यादिना** दर्शयति। **अस्ति स्वयम्बुद्धसिद्धः**, स्वयमेव बुद्धः,

---

[1] 'सिध्यति' इति घ-पाठः। [2] 'पूर्वभावप्रज्ञापनीयस्य नोचारित्री सिध्यतीति' इत्यधिको ग-पाठः। [3] 'अचरित' इति च-ज-पाठः। [4] 'साम्परायिक' इति घ-पाठः। [5] 'सिद्धाः' इति घ-पाठः।

नान्येन बोधितः। स द्विविधः—तीर्थकरोऽर्हतां तीर्थकरनामकर्मोदयभाक्। तथा परः प्रत्येकबुद्धसिद्धः प्रत्येकमेकमात्मानं प्रति केनचिन्निमित्तेन सञ्जातजातिस्मरणाद् वल्कलचीरिप्रभृतयः करकण्डवादयश्च प्रत्येकबुद्धाः। बुद्धबोधितोऽपि द्विविधः। बुद्धेन–ज्ञातसिद्धान्तेन विदितसंसारस्वभावेन बोधितो बुद्धबोधितः। परबोधकः परस्मायुपदेशं ददाति। अपरः पुनः स्वस्मै इष्टं-हितं स्वेष्टं तत्करणशीलः स्वेष्टकारी, न परस्मै युगपदुपदिशति किञ्चिदिति चतुर्थो विकल्पः। एते चत्वारोऽपि विकल्पा विकल्पद्वयमनुप्रविशन्ति। तत्र स्वयम्बुद्धसिद्धे तीर्थकरः प्रत्येकबुद्धश्च बुद्धबोधितसिद्धे परबोधकः स्वेष्टकारी चेति॥

चतुर्विकल्पानां द्वयेऽन्तर्भावः

भा०—ज्ञानम्। अत्र प्रत्युत्पन्नभावप्रज्ञापनीयस्य केवली सिध्यति। पूर्वभावप्रज्ञापनीयो द्विविधः—अनन्तरपश्चात्कृतिकश्च परम्परपश्चात्कृतिकश्च अव्यञ्जिते च व्यञ्जिते च। अव्यञ्जिते द्वाभ्यां ज्ञानाभ्यां सिध्यति। त्रिभिश्चतुर्भिरिति। व्यञ्जिते द्वाभ्यां मति-श्रुताभ्याम्, त्रिभिर्मति-श्रुता-ऽवधिभिः मति-श्रुत-मनःपर्यायैर्वा, चतुर्भिर्मति-श्रुता-ऽवधि-मनःपर्यायैरिति॥

टी०—ज्ञानमिति। अत्रापि तावेव द्वौ नयौ। तत्र वर्तमानकालग्राहिणः केवलज्ञानवान् सिध्यति। इतरोऽपि द्विविधः। तत्रानन्तरं कदाचित् किञ्चित् ज्ञानं भवति परम्परपश्चात्कृतिकस्य। अव्यञ्जिते व्यञ्जिते चेति चत्वारो विकल्पाः। तत्राव्यञ्जिते द्वे त्रीणि चत्वारि वा ज्ञानानि पश्चात्कृतानि। व्यञ्जिते मते मति-श्रुतवान् मति-श्रुता-ऽवधिमान् मति-श्रुत-मनःपर्यायवान् वा मति-श्रुता-ऽवधि-मनःपर्यायवान् सिध्यतीति॥

भा०—अवगाहना। कः कस्यां शरीरावगाहनायां वर्तमानः सिध्यति?। अवगाहना द्विविधा—उत्कृष्टा जघन्या च। उत्कृष्टा पञ्चधनुःशतानि धनुःपृथक्त्वेनाभ्यधिकानि। जघन्याः सप्त रत्नयोऽङ्गुलपृथक्त्वहीनाः। एतासु शरीरावगाहनासु सिध्यति पूर्वभावप्रज्ञापनीयस्य। अप्रत्युत्पन्नभावप्रज्ञापनीयस्य तु एतास्वेव यथास्वं त्रिभागहीनासु सिध्यति॥

टी०—अवगाहनेति। आत्मनः शरीरेऽवगाहः–अनुप्रवेशः। सङ्कोचविकासधर्मत्वादात्मनस्तच्छरीरं किंप्रमाणमिति चिन्त्यतेऽवगाहना चरमशरीरे। साऽवगाहना द्विधा—उत्कृष्टा जघन्या च। तत्रोत्कृष्टा पञ्च धनुःशतानि धनुःपृथक्त्वेनाभ्यधिकानि,

---

१ 'परस्मायुगपदिशति' इति च-ज-पाठः। २ 'पृथक्त्वेन हीनाः' इति घ–पाठः।

द्विप्रभृत्या नवभ्यः पृथक्त्वसंज्ञा च। एतच्चोत्कृष्टं देहमानं मरुदेवीप्रभृतीनां सम्भवति।

तीर्थकराणामवगाहना

तीर्थकराणां पञ्चव धनुःशतान्युत्कृष्टा जघन्या च सप्तहस्तानां तीर्थकराणामेव। अङ्गुलपृथक्त्वोना सामान्येन तु जघन्या द्विहस्तानां वामनकूर्मसुतादीनामिति। तत्र पूर्वभावप्रज्ञापनीयस्य एतास्वेवावगाहनासु सिध्यति। प्रत्युत्पन्नभावप्रज्ञापनीये तु एतास्वेवावगाहनासु यथास्वं पञ्चधनुःशतादिकासु त्रिभागहीनासु सिध्यतीति ॥

**भा०—अन्तरम्। सिध्यमानानां किमन्तरम्?। अनन्तरं च सिध्यन्ति सान्तरं च सिध्यन्ति। तत्रानन्तरं जघन्येन द्वौ समयौ, उत्कृष्टेनाष्टौ समयान्। सान्तरं जघन्येनैकं समयं, उत्कृष्टेन षण्मासा इति ॥**

टी०—अन्तरमिति। सिध्यमानानां जीवानामन्तरं च। तत्रान्तरमेको वर्तमानसमये सिद्धस्ततोऽन्यः कियता कालेन सेत्स्यतीति सिद्धेः गमनशून्यः कालोऽन्तरम्, अन्तरालमित्यर्थः। अनन्तरं निरन्तरमन्त्यव्यवच्छेदोऽनुसन्ततमित्यर्थः। तत्र नैरन्तर्येण जघन्यतः सिध्यन्ति द्वौ समयौ उत्कृष्टेनाष्टौ समयानिति। ततः परं व्यवच्छेदः। अन्तरं तु जघन्येनैकसमयः, उत्कृष्टेन षण्मासाः सिध्यन्तः सिध्यतो व्यवच्छिद्यन्ते। व्यवच्छेदः कदाचिदेकस्मिन् समये द्वयोस्त्रिषु वेत्यादि यावत् षण्मासा इति ॥

**भा०—सङ्ख्या। कत्येकसमये सिध्यन्ति?। जघन्येनैकः, उत्कृष्टेनाष्टशतम् ॥**

टी०—सङ्ख्येति। एकस्मिन् समये कति सिध्यन्ति? जघन्यत एकः सिध्यति, उत्कृष्टेनाष्टोत्तरशतमिति ॥

**भा०—अल्पबहुत्वम्। एषां क्षेत्रादीनामेकादशानामनुयोगद्वाराणामल्पबहुत्वं वाच्यम्। तद्यथा—क्षेत्रसिद्धानां जन्मतः संहरणतश्च कर्मभूमिसिद्धा अकर्मभूमिसिद्धाश्च[2] सर्वस्तोकाः, संहरणसिद्धा जन्मतोऽसङ्ख्येयगुणाः ॥**

टी०—अल्पबहुत्वमित्यादि। एषां क्षेत्रादीनां सङ्ख्यातानामेकादशानामल्पबहुत्वं चिन्त्यते जन्मनः संहरणतश्चेति। जन्मतः पञ्चदशसु कर्मभूमिषु अकर्मभूमयस्त्रिंशत् हैमवताद्याः। तत्र संहरणं कर्मभूमिष्वकर्मभूमिषु वा। तत्र सर्वस्तोकाः संहरणसिद्धाः। अत एवासङ्ख्येयगुणा जन्मतः सिद्धाः ॥

**भा०—संहरणं द्विविधं—परकृतं स्वयंकृतं च। परकृतं देवकर्मणा चारण-विद्याधरैश्च। स्वयंकृतं चारण-विद्याधराणामेव। एषां च क्षेत्राणां विभागः कर्मभूमिरकर्मभूमिः समुद्रा द्वीपा ऊर्ध्वमधस्तिर्यगिति लोकत्रयम्। तत्र सर्वस्तोका ऊर्ध्व-**

१ 'सिध्यतां' इति ङ-ज-पाठः। २ 'सिद्धाश्च' इति घ-पाठः।

लोकसिद्धाः, अधोलोकसिद्धाः सङ्ख्येयगुणाः, तिर्यग्लोकसिद्धाः सङ्ख्येयगुणाः, सर्वस्तोकाः समुद्रसिद्धाः, द्वीपसिद्धाः संख्येयगुणाः। एवं तावदव्यञ्जिते व्यञ्जितेऽपि सर्वस्तोका लवणसिद्धाः कालोदसिद्धाः सङ्ख्येयगुणाः, जम्बूद्वीपसिद्धाः सङ्ख्येयगुणाः, धातकीखण्डसिद्धाः सङ्ख्येयगुणाः, पुष्करार्धसिद्धाः सङ्ख्येयगुणा इति॥

टी०—संहरणं द्विविधमित्यादि गतार्थम्। समभूतलाद्भूभागा नव योजनशतान्यारुह्य तत उपर्यूर्ध्वलोकः, अधोलोकोऽपि नव योजनशतान्यवगाह्य परतोऽष्टादशयोजनशतपरिमाणो मध्ये तिर्यग्लोकः। भाष्यशेषं पठितसिद्धम्।

एवं क्षेत्रगतमल्पबहुत्वमभिधाय कालकृतमल्पबहुत्वं भण्यते—

भा०—काल इति त्रिविधो विभागो भवति—अवसर्पिणी उत्सर्पिणी अनवसर्पिण्युत्सर्पिणीति। अत्र सिद्धानां व्यञ्जिताव्यञ्जितविशेषयुक्तोऽल्पबहुत्वानुगमः कर्तव्यः। पूर्वभावप्रज्ञापनीयस्य सर्वस्तोका उत्सर्पिणीसिद्धाः, अवसर्पिणीसिद्धा विशेषाधिकाः, अनवसर्पिण्युत्सर्पिणीसिद्धाः सङ्ख्येयगुणा इति। प्रत्युत्पन्नभावप्रज्ञापनीयस्याकाले सिध्यति। नास्त्यल्पबहुत्वम्।

टी०—काल इति। त्रिविधो विभागो भवतीत्यादि सुज्ञानमेव भाष्यम्॥

भा०—गतिः। प्रत्युत्पन्नभावप्रज्ञापनीयस्य सिद्धिगतौ सिध्यति। नास्त्यल्पबहुत्वम्। पूर्वभावप्रज्ञापनीयस्यानन्तरपश्चात्कृतिकस्य मनुष्यगतौ सिध्यति। नास्त्यल्पबहुत्वम्। परम्परपश्चात्कृतिकस्याऽनन्तरा गतिश्चिन्त्यते। तद्यथा—सर्वस्तोकास्तिर्यग्योन्यनन्तरगतिसिद्धाः, मनुष्येभ्योऽनन्तरगतिसिद्धाः सङ्ख्येयगुणाः, नारकेभ्योऽनन्तरगतिसिद्धाः सङ्ख्येयगुणाः, देवेभ्योऽनन्तरसिद्धाः सङ्ख्येयगुणा इति॥

टी०—गतावल्पबहुत्वं चिन्त्यते—तिर्यग्योन्यनन्तरगतिसिद्धा इति। तिर्यग्योनेरुद्धृत्य मनुष्यगतौ सिद्धास्तथा मनुष्यगतेरेवोद्धृत्य मनुष्येषूत्पद्यन्ते सिद्धाः। एवं शेषेष्वपि वाच्यम्॥

भा०—लिङ्गम्। प्रत्युत्पन्नभावप्रज्ञापनीयस्य व्यपगतवेदः सिध्यति। नास्त्यल्पबहुत्वम्। पूर्वभावप्रज्ञापनीयस्य सर्वस्तोका नपुंसकलिङ्गसिद्धाः, स्त्रीलिङ्गसिद्धाः सङ्ख्येयगुणाः, पुंलिङ्गसिद्धाः सङ्ख्येयगुणा इति॥

टी०—लिङ्गमिति स्त्र्यादिकम्। नपुंसकसिद्धाः स्तोकाः। स्त्रीसिद्धाः सङ्ख्येयगुणाः। पुंसिद्धाः सङ्ख्येयगुणा इति।

१ 'न च अल्प' इति ग-पाठः।

**भा०—तीर्थम् । सर्वस्तोकास्तीर्थकरसिद्धाः तीर्थकरतीर्थे नोतीर्थकरसिद्धाः सङ्ख्येयगुणा इति । तीर्थकरतीर्थसिद्धा नपुंसकाः सङ्ख्येयगुणाः । तीर्थकरतीर्थसिद्धाः स्त्रियः सङ्ख्येयगुणाः । तीर्थकरतीर्थसिद्धाः पुमांसः सङ्ख्येयगुणा इति ॥**

टी०—तीर्थमित्यत्राल्पबहुत्वचिन्ता । तीर्थकरतीर्थे नोतीर्थकरसिद्धा अतीर्थकराः सन्तः सिद्धास्तीर्थकरसिद्धेभ्यः सङ्ख्येयगुणास्ते नपुंसकादयोऽपि सर्वे सङ्ख्येयगुणाः ॥

**भा०—चारित्रम् । अत्रापि नयौ द्वौ–प्रत्युत्पन्नभावप्रज्ञापनीयश्च पूर्वभावप्रज्ञापनीयश्च । प्रत्युत्पन्नभावप्रज्ञापनीयस्य नोचारित्री नोऽचारित्री सिध्यति । नास्त्यल्पबहुत्वम् । पूर्वभावप्रज्ञापनीयस्य व्यञ्जिते चाव्यञ्जिते च । अव्यञ्जिते सर्वस्तोकाः पञ्चचारित्रसिद्धाश्चतुश्चारित्रसिद्धाः सङ्ख्येगुणाः त्रिचारित्रसिद्धाः सङ्ख्येयगुणाः । व्यञ्जिते सर्वस्तोकाः सामायिक-छेदोपस्थाप्य-परिहारविशुद्धि-सूक्ष्मसम्पराय-यथाख्यातचारित्रसिद्धाः छेदोपस्थाप्य-परिहारविशुद्धि-सूक्ष्मसम्पराय-यथाख्यातचारित्रसिद्धाः सङ्ख्येयगुणाः सामायिक-छेदोपस्थाप्य-सूक्ष्मसम्पराय-यथाख्यातचारित्रसिद्धाः सङ्ख्येयगुणाः [ सामायिक-परिहारविशुद्धि-सूक्ष्मसम्पराय-यथाख्यातसिद्धाः सङ्ख्येयगुणाः ] सामायिक-सूक्ष्मसम्पराय-यथाख्यातचारित्रसिद्धाः सङ्ख्येयगुणाः छेदोपस्थाप्य-सूक्ष्मसम्पराय-यथाख्यातचारित्रसिद्धाः सङ्ख्येयगुणाः ॥**

टी०—चारित्रमित्यत्रापि तावेव द्वौ नयौ चतुश्चारित्रसिद्धेषु द्वौ विकल्पौ, त्रिचारित्रसिद्धेष्वपि द्वावेव । सर्वत्र सङ्ख्येयगुणत्वम् ।

**भा०—प्रत्येकबुद्धबोधितः । सर्वस्तोकाः प्रत्येकबुद्धसिद्धाः । बुद्धबोधितसिद्धा नपुंसकाः सङ्ख्येयगुणाः । बुद्धबोधितसिद्धाः स्त्रियः सङ्ख्येयगुणाः । बुद्धबोधितसिद्धाः पुमांसः सङ्ख्येयगुणा इति ॥**

टी०—प्रत्येकबुद्धबोधित इत्यत्र सर्वस्तोकाः प्रत्येकबुद्धसिद्धाः । सर्वत्र सङ्ख्येयगुणत्वम् ॥

**भा०—ज्ञानम् । कः केन ज्ञानेन युक्तः सिध्यति ? । प्रत्युत्पन्नभावप्रज्ञापनीयस्य सर्वः केवली सिध्यति । नास्त्यल्पबहुत्वम् । पूर्वभावप्रज्ञापनीयस्य सर्वस्तोका द्विज्ञानसिद्धाः, चतुर्ज्ञानसिद्धाः सङ्ख्येयगुणाः, त्रिज्ञानसिद्धाः सङ्ख्येयगुणाः । एवं तावदव्यञ्जिते व्यञ्जितेऽपि सर्वस्तोका मति-श्रुतज्ञानसिद्धाः, मति-श्रुता-ऽवधि-मनःपर्यायज्ञानसिद्धाः सङ्ख्येयगुणाः, मति-श्रुता-ऽवधिज्ञानसिद्धाः सङ्ख्येयगुणा इति ॥**

---

१ 'इति' इति पाठो नास्ति घ–पुस्तके ।

टी०— ज्ञानमित्यत्रापि सर्वत्र सङ्ख्येयगुणत्वम् ॥

भा०— अवगाहना । सर्वस्तोका जघन्यावगाहनासिद्धाः । उत्कृष्टावगाहनासिद्धास्ततोऽसङ्ख्येयगुणाः । यवमध्यसिद्धा असङ्ख्येयगुणाः, यवमध्योपरिसिद्धा असङ्ख्येयगुणाः, यवमध्याधस्तात् सिद्धा विशेषाधिकाः, सर्वे विशेषाधिकाः ॥

टी०— अवगाहनेत्यत्र उत्कृष्टावगाहनासिद्धा असङ्ख्येयगुणाः । द्वावसङ्ख्येयगुणौ द्वौ विशेषाधिकाविति ॥

भा०— अन्तरम् । सर्वस्तोका अष्टसमयानन्तरसिद्धाः, सप्तसमयानन्तरसिद्धाः षट्समयानन्तरसिद्धा इत्येवं यावद् द्विसमयानन्तरसिद्धा इति सङ्ख्येयगुणाः । एवं तावदनन्तरेषु सान्तरेष्वपि सर्वस्तोकाः षण्मासान्तरसिद्धाः, एकसमयान्तरसिद्धाः सङ्ख्येयगुणाः, यवमध्यान्तरसिद्धाः सङ्ख्येयगुणाः, अधस्ताद्यवमध्यान्तरसिद्धाः सङ्ख्येयगुणाः, उपरियवमध्यान्तरसिद्धा विशेषाधिकाः, सर्वे विशेषाधिकाः ॥

टी०— अन्तरमित्यत्राष्टासु समयेषु नैरन्तर्येण सिद्धाः सर्वेऽपि सङ्ख्येयगुणाः । सान्तरेष्वपीत्यादि । एकसमयान्तरसिद्धाः सङ्ख्येयगुणा यवमध्यान्तरे च सङ्ख्येयगुणाः, अधस्ताद्यवमध्यान्तरे च सङ्ख्येयगुणाः ॥

भा०— सङ्ख्या । सर्वस्तोका अष्टोत्तरशतसिद्धाः, विपरीतक्रमात् सप्तोत्तरशतसिद्धादयो यावत् पञ्चाशदित्यनन्तगुणाः । एकोनपञ्चाशदादयो यावत् पञ्चविंशतिरित्यसङ्ख्येयगुणाः[1] । चतुर्विंशत्यादयो यावदेक इति सङ्ख्येयगुणाः विपरीतहानिर्यथा–सर्वस्तोका अनन्तगुणहानिसिद्धाः, असङ्ख्येयगुणहानिसिद्धा अनन्तगुणाः, सङ्ख्येयगुणहानिसिद्धाः सङ्ख्येयगुणा इति ॥

टी०— सङ्ख्येत्यत्र अष्टोत्तरशतसिद्धाः सर्वस्तोकाः । विपरीतक्रमादिति सप्तोत्तरशतसिद्धा अनन्तगुणाः । एवं विपरीतहान्या यावत् पञ्चाशदित्यनन्तगुणाः । विपरीतहानिर्यथेत्यादिना दर्शयति । सर्वस्तोका अनन्तगुणहानिसिद्धाः, असङ्ख्येयगुणहानिसिद्धा अनन्तगुणाः, सङ्ख्येयगुणहानिसिद्धाः सङ्ख्येयगुणा इति ॥

भा०— एवं निसर्गा-ऽधिगमयोरन्यतरजं तत्त्वार्थश्रद्धानात्मकं शङ्काद्यतिचारवियुक्तं प्रशम-संवेग-निर्वेदा-ऽनुकम्पा-ऽऽस्तिक्याभिव्यक्तिलक्षणं विशुद्धं सम्यग्दर्शनमवाप्य सम्यग्दर्शनोपलम्भाद् विशुद्धं च ज्ञानमधिगम्य निक्षेप-प्रमाण-नय-निर्देश-सत्-सङ्ख्यादिभिरभ्युपायैर्जीवादीनां तत्त्वानां पारिणामिकौ-दयिकौ-पश-

---

१ 'असङ्ख्येय' इति ध–पाठः ।

मिकक्षायोपशमिक-क्षायिकानां भावानां स्वतत्त्वं विदित्वा आदिमत्पारिणामिकौदयिकानां च भावानामुत्पत्तिस्थित्यन्यतानुग्रहप्रलयतत्त्वज्ञो विरक्तो [1]निस्तृष्णः त्रिगुप्तः पञ्चसमितो दशलक्षणधर्मानुष्ठानात् फलदर्शनाच्च निर्वाणप्राप्तियतनयाऽभिवर्धितश्रद्धासंवेगो भावनाभि र्भावितात्माऽनुप्रेक्षाभिः स्थिरीकृतात्मानभिष्वङ्गः संवृतत्वान्निरास्रवत्वाद् विरक्तत्वान्निस्तृष्णत्वाच्च व्यपगताभिनवकर्मोपचयः परीषहजयाद् बाह्याभ्यन्तरतपोऽनुष्ठानात् अनुभावतश्च सम्यग्दृष्टयविरतादीनां च जिनपर्यन्तानां परिणामाध्यवसायविशुद्धिस्थानान्तराणामसङ्ख्येयगुणोत्कर्षप्राप्त्या पूर्वोपचितकर्म निर्जरयन् सामायिकादीनां च सूक्ष्मसम्परायान्तानां संयमविशुद्धिस्थानानामुत्तरोत्तरोपलम्भात् पुलाकादीनां च निर्ग्रन्थानां संयमानुपालनविशुद्धिस्थानविशेषाणामुत्तरोत्तरप्रतिपत्त्या घटमानोऽत्यन्तप्रहीणार्त्तरौद्रध्यानो धर्मध्यानविजयादवाप्तसमाधिबलः शुक्लध्यानयोश्च पृथक्त्वैकत्ववितर्कयोरन्यतरस्मिन् वर्तमानो नानाविधानृद्धिविशेषान् प्राप्नोति । तद्यथा—आमर्शौषधित्वं विप्रुडौषधित्वं सर्वौषधित्वं शापानुग्रहसामर्थ्यजननीमभिव्याहारसिद्धिमीशित्वं वशित्वं अवधिज्ञानं शारीरविकरणाङ्गप्राप्तितामणिमानं लघिमानं महिमानं अणुत्वम् । अणिमा बिसच्छिद्रमपि प्रविश्यासीत । लघुत्वं नाम लघिमा वायोरपि लघुतरः स्यात् । महत्त्वं महिमा मेरोरपि महत्तरं शरीरं विकुर्वीत । प्राप्तिर्भूमिष्ठोऽङ्गुल्यग्रेण मेरुशिखरभास्करादीनपि स्पृशेत् । प्राकाम्यमप्सु भूमाविव गच्छेत्, भूमावप्स्विव निमज्जेदुन्मज्जेच्च ॥

टी० —एवमित्यादिना मन्दबुद्ध्यनुग्रहार्थं सकलमेव तत्त्वार्थशास्त्रार्थं समासतः कथयति—विशुद्धं सम्यग्दर्शनमवाप्यैतस्य विशेषणानि निसर्गाधिगमादीनि । ज्ञानं च विशुद्धमधिगम्य सम्यग्दर्शनोपलम्भात् मिथ्यादर्शनभावितमज्ञानमेव नियमतो मिथ्यादृष्टेः सम्यक्त्वलाभे तु विशुद्धं ज्ञानम् । निक्षेपो नामादिः । प्रमाणे प्रत्यक्ष-परोक्षे । नया नैगमादयः । तथा निर्देश-स्वामित्वादिभिः सत्-सङ्ख्या-क्षेत्रादिभिश्च जीवादीनां च पारिणामिकादयो ये भावास्तेषां स्वरूपं विदित्वा धर्माधर्मादीनां अनादीनामादिमतां च पारिणामिकादीनां घनशरीरादीनामुत्पत्तिस्थितिविनाशवतामनुग्रहः—उपकारस्तत्कृतः प्रलयः—उपघात इत्येवमवगम्य तत्त्वज्ञो विरक्तः सांसारिकेभ्यो भावेभ्यो विगततृष्णो गुप्त्याद्यनुष्ठानात् फलदर्शनाच्चेति निर्वाणमेव फलं तत्प्राप्तौ यत्नार्थमभिवर्धितश्रद्धासंवेगः पञ्चानां व्रतानां भावना ईर्यासमित्यादयस्ताभि[2]र्भावितात्मा अनित्याद्यनुप्रेक्षाभिः स्थिरीकृतात्मा अनभिष्वङ्गो—न क्वचिदा[3]बद्धस्नेहः संवृतत्वादिभिर्व्यपगताभिनव-

उपसंहारः

१ 'निस्तृषः' इति ग-पाठः । २ 'भाविनः' इति ङ-पाठः । ३ 'प्रादुर्भावादाबद्ध' इति ङ-ज-पाठः ।

कर्मोपचयः। कर्मणां चानुभावतः सम्यग्दृष्ट्यादिगुणस्थानानां केवलिपर्यन्तानाम-सङ्ख्येयगुणोत्कर्षप्राप्त्या पूर्वोपचितकर्मनिर्जरणात् सामायिकाद्युपलम्भात् पुलाकादिस्थानावाप्तेर्व्यपेतार्तध्यानरौद्रध्यानो धर्मध्यानविजयाभ्यासादवाप्ताद्यशुक्लध्यानद्वयस्य नानाविधा लब्धय उत्पद्यन्ते। स्वहस्तपादावयवपरामर्शमात्रेणैव सर्वरोगापनयनसामर्थ्यमामर्शौषधित्वम्। तदीयमूत्रपुरीषावयवसम्पर्काच्छरीरनैरुज्यं विप्रुडौषधित्वम्। तथा सर्व एव तदीयावयवा दुःखार्तानामोषधीभवन्तीति सर्वौषधित्वम्। अभिव्याहारसिद्धिर्वाङ्मात्रेणैव। शापदानसामर्थ्यमनुग्रहणसामर्थ्यं च। ईशित्वं सर्वभूतेश्वरत्वम्। वशित्वं सर्वभूतानि स्ववशवर्तीनि। तथाऽवधिज्ञानमेकरूपं वैक्रियशरीरकरणं तदेव च दर्शयत्यणिमादिविशिष्टम्॥

भा०—जङ्घाचारणत्वं येनाग्निशिखाधूमनीहारावश्यायमेघवारिधारामर्कटतन्तुज्योतिष्करश्मिवायूनामन्यतममप्युपादाय वियति गच्छेत्। वियद्गतिचारित्वं येन वियति भूमाविव गच्छेत् शाकुनिवच्च प्रडीनावडीनगमनानि कुर्यात्॥

टी०—जङ्घाचारणत्वमग्निशिखाधूमाद्यपि निश्रित्य[3] व्योम्नि गच्छेत्। मर्कटतन्तुः कोलिककोशीकृततन्तुः[4]। अपरं वियद्गतिचारणत्वं निर्निश्र एव विस्रब्धो भूमाविव व्योम्नि गच्छेत्। यथा च शाकुनिर्वियति प्रडीनम्-उपरिष्टाद् गमनं अवडीनम्-अधस्ताद् गमनं करोत्येवमसावपि कुर्यात्॥

भा०—अप्रतिघातित्वं पर्वतमध्येन वियतीव गच्छेत्। अन्तर्धानमदृश्यो भवेत्। कामरूपित्वं नानाश्रयानेकरूपधारणं युगपदपि कुर्यात्। तेजोनिसर्गसामर्थ्यमेतदादि। इति इन्द्रियेषु मतिज्ञानविशुद्धिविशेषाद् दूरात्[5] स्पर्शनाऽऽस्वादन-घ्राण-दर्शन-श्रवणानि विषयाणां कुर्यात्। सम्भिन्नज्ञानत्वं[6] युगपदनेकविषयपरिज्ञानमित्येतदादि। मानसं कोष्ठबुद्धित्वं बीजबुद्धित्वं पदप्रकरणोद्देशाध्यायप्राभृतवस्तुपूर्वाङ्गानुसारित्वं ऋजुमतित्वं विपुलमतित्वं परचित्तज्ञानमभिलषितार्थप्राप्तिमनिष्टानवाप्तिमित्येतदादि॥

टी०—गच्छन् पर्वतमित्यादिभिरपि न प्रतिहन्यत इत्यप्रतिघातित्वम्। अन्तर्धानम्-अदृश्यत्वम्। युगपदनेकरूपधारणं कामरूपित्वम्। तेजोलेश्यामोक्षणम् आदिग्रहणात् शीतलेश्यानिसर्गशक्तिः। मतिज्ञानविशुद्धिप्रकर्षाद् विषयाणां-रूपादीनां देशप्रमाणनियमोल्लङ्घनेनापि ग्रहणं कुर्यात्। युगपदनेकविषयग्रहणं सम्भिन्नज्ञानत्वम्। आदिग्रहणादिन्द्रियव्यत्यासेनापि विषयग्रहणसामर्थ्यम्। मानसं-मनोव्यापारजातम्। कोष्ठबुद्धित्वं

१ 'कर्मोचयः' इति ग-पाठः। २ 'जयादभ्या' इति ग-पाठः। ३ 'निश्रित्य' इति ग-पाठः। ४ 'कौशिकतन्तुः' इति ग-पाठः। ५ 'दूरात्' इति ग-पाठः। ६ 'सम्भिन्नत्वम्' इति ग-पाठः।

यत्किञ्चित् पदवाक्यार्थादि गृहीतं तन्न कदाचिन्नश्यतीति, कोष्ठप्रक्षिप्तधान्यवत् । बीजबुद्धित्वं स्वल्पमपि दर्शितं वस्तु अनेकप्रकारेण गमयति । तद्यथा पदेन प्रदर्शितेन प्रकरणेनोद्देशकादिना सर्वमर्थं ग्रन्थं चानुधावति । परचित्तं जानाति । अभिलषितमर्थं प्राप्नोत्येवं अनिष्टं च नैवाप्नोति । एवमादयोऽतिशयाः शुभानुभावादपरिमितास्तस्य तस्यामवस्थायां प्रादुःष्यन्तीति ॥

भा०—वाचिकं क्षीरास्रवित्वं मध्वास्रवित्वं वादित्वं सर्वरुतज्ञत्वं सर्वसत्त्वावबोधनमित्येतदादि । तथा विद्याधरत्वमाशीविषत्वं भिन्नाभिन्नाक्षरचतुर्दशपूर्वधरत्वमिति ॥

टी०—वाचिकमप्यतिशयवत्त्वम्[1] । तस्य क्षीरास्रवित्वं शृण्वतस्तदीयवचनं क्षीरमिव स्वदते । एवं मध्वास्रवित्वम् । विद्वत्संसन्मध्येऽपराजितत्वं वादित्वम् । सर्वेषां म्लेच्छ-मृग-पशु-पक्षिप्रभृतीनां रुतार्थज्ञत्वम् । सर्वान् सत्त्वानबुद्धिकानपि बोधयतीति सर्वसत्त्वावबोधनम् । आदिग्रहणादिक्षुरसास्रवित्वादिग्रहणम् । तथा विद्याधरत्वं महाविद्याः सर्वा एव तस्य तदा स्वयमेवोपतिष्ठन्ते । आशीविषत्वं कर्मजातिभेदादनेकप्रकारम् । भिन्नाक्षराणि किञ्चिन्न्यूनाक्षराणि चतुर्दश पूर्वाणि सम्पूर्णानि वा तद्धारणत्वम् ॥

भा०—ततोऽस्य निस्तृष्णत्वात् तेष्वनभिष्वक्तस्य मोहक्षपकपरिणामावस्थस्याष्टाविंशतिविधं मोहनीयं निरवशेषतः प्रहीयते । ततश्छद्मस्थवीतरागत्वं प्राप्तस्यान्तर्मुहूर्तेन ज्ञानावरण-दर्शनावरणा-ऽन्तरायाणि युगपदशेषतः प्रहीयन्ते । ततः संसारबन्धबीजबन्धननिर्मुक्तः फलबन्धनमोक्षापेक्षो यथाख्यातसंयतो जिनः केवली सर्वज्ञः सर्वदर्शी शुद्धो बुद्धः कृतकृत्यः स्नातको भवति । ततो वेदनीय-नाम-गोत्राऽऽयुष्यक्षयात् फलबन्धननिर्मुक्तो निर्दग्धपूर्वोपात्तेन्धनो निरुपादान इवाग्निः पूर्वोपात्तभववियोगात् हेत्वभावाच्चोत्तरस्याप्रादुर्भावाच्छान्तः ॥

टी०—ततोऽस्येत्यादि । तेषु—अतिशयेष्वनभिष्वक्तस्य—अनुपजातगार्ध्यस्य मोहक्षपकपरिणामावस्थस्येति । अविरतसम्यग्दृष्ट्यादिस्थानवर्तिनो मोहक्षपणाभिमुखस्य श्रेण्या निरवशेषमोहक्षये सति ज्ञानावरणादिप्रहाणे च संसारबीजबन्धनं-मोहज्ञानावरणादि तेन निर्मुक्तः केवली भवति । ततश्च फलबन्धनं वेदनीयादिचतुष्कं तन्मोक्षणापेक्षस्तेनापि वेदनीयादिना अशेषफलबन्धनेन विमुक्तो ध्यानाग्निनिर्दग्धपूर्वोपात्तकर्मेन्धनो निरिन्धन इवाग्निः पूर्वोपात्तो भवः—औदारिकादिकायस्तद्वियोगादुत्तरस्य च कायस्य हेत्वभावात्[4] संसारे पुनरप्रादुर्भावाच्छान्तः परमाह्लादमुपगतः कारणापेक्षम्—

---

१ 'शयत्वम्' इति ज-पाठः । २ 'क्षय' इति ङ-पाठः । ३ 'बन्धनिर्मुक्तः' इति घ-पाठः । ४ 'हेतुभावात्' इति ङ-च-पाठः ।

**भा०—संसारसुखमतीत्यात्यन्तिकमैकान्तिकं निरुपमं नित्यं निरतिशयं निर्वाणसुखमवाप्नोतीति ॥ ७ ॥**

**टी०—संसारसुखमतीत्यात्यन्तिकं** साद्यपर्यवसानमैकान्तिकं एकान्तेनैव भवति, न कदाचिन्न भवतीत्यर्थः । **निरुपममिति** नास्ति इह किञ्चित् तस्योपमानं तत्सदृशमिति । **निरतिशयमिति**[2] नास्यातिशयः प्रकर्षापकर्षलक्षणो विद्यते, सर्वमुक्तानां तुल्यत्वात् । **नित्यमिति** ध्रुवं कूटस्थमविचालि **निर्वाणसुखमवाप्नोतीति** ।

सत्कारार्हः सततं, निरुत्सुको निर्भयो विरुग् विगदः ।
निःप्रणयो निर्द्वेषो, निर्द्वन्द्वो नीरजा वितनुः ॥ १ ॥—आर्या
संसाराग्निं निर्वा-प्य दहन्तं परमसौख्यसलिलेन ।
निर्वाति स्वात्मस्थो, गतजाति-जरा-मरण-रोगः ॥ २ ॥ —,,
व्याबाधाभावाच्च स, सर्वज्ञत्वाच्च भवति परमसुखी ।
व्याबाधाभावो नु, स्वस्थस्य[3] ज्ञस्य ननु सुसुखम् ॥ ३ ॥—,,
अनुपममप्रमेयमव्यय-मनर्घं शिवमजरमरुजमभयतृषम् ।
एकान्तिकमात्यन्तिक[4]-मव्याबाधं सुखं ह्येतत् ॥ ४ ॥ —,,
त्रिष्वपि कालेषु सुखा-नि यानि तिर्यङ्-मनुष्य-देवानाम् ।
सर्वाणि तानि न समा-नि तस्य मात्रा[5] सुखेनापि ॥ ५ ॥—,,
तानि हि रागोत्क्षोभा-व्याबाधापूर्वकाणि च सुखानि ।
नह्यस्ति रागमपवि-ध्य तत्र किञ्चित् सुखमपृक्तम् ॥ ६ ॥—,,
एवं क्षायिकसम्यक्-त्वं वीर्य-सिद्धत्व-दर्शन-ज्ञानैः ।
आत्यन्तिकैः स युक्तो, निर्द्वन्द्वेनापि च सुखेन ॥ ७ ॥—,,

सम्प्रत्येनमेव शास्त्रार्थं श्लोकैरुपसंहरति, द्विबद्धं सुबद्धं भवतीति ॥

**भा०—एवं तत्त्वपरिज्ञानाद्, विरक्तस्यात्मनो भृशम् ।**
**निरास्रवत्वाच्छिन्नायां, नवायां कर्मसन्ततौ ॥ १ ॥—अनु०**

**टी०—एवमित्यादि** । उक्तनीत्या यानि जीवादीनि **तत्त्वानि तत्परिज्ञानाद् विरक्तस्य**-विषयसुखवितृष्णस्य **भृशमात्मनः** स्थगितास्रवद्वारत्वाद् विच्छिन्नायामभिनवकर्मसन्ततौ-कर्मसन्ताने ॥ १ ॥

---

१ 'वाप्नोति' इति ग-पाठः । २ 'पुलाकादिस्वातिशयः' इत्यधिको ज-पाठः । ३ 'स्वस्य ज्ञस्यापि' इति ङ-पाठः । ४ 'कं निरुपमं' इति घ-पाठः । ५ 'मामि' इति ज-पाठः, च-पाठस्तु 'नाभि' ।

भा०—पूर्वार्जितं क्षपयतो, यथोक्तैः क्षयहेतुभिः ।
संसारबीजं कात्स्न्र्येन, मोहनीयं प्रहीयते ॥ २ ॥—अनु०

टी०—पूर्वेत्यादि । प्राक्तनं कर्म क्षपयतस्तपोऽनुष्ठानादिभिः क्षयितृभिः संसार-तरोर्बीजं समस्तमेव मोहनीयं प्रहीयते क्षपकश्रेण्याम् ॥ २ ॥

भा०—ततोऽन्तरायज्ञानघ्न—दर्शनघ्नान्यनन्तरम् ।
प्रहीयन्तेऽस्य युगपत्, त्रीणि कर्माण्यशेषतः ॥ ३ ॥—अनु०

टी०—तत इत्यादि । अन्तराये ज्ञानदर्शनावरणयोश्च क्षीणयोर्युगपत् अशेषतः॥३॥

भा०— गर्भसूच्यां विनष्टायां, यथा तालो विनश्यति ।
तथा कर्म क्षयं याति, मोहनीये क्षयं गते ॥ ४ ॥—अनु०

टी०—गर्भसूच्यामित्यादि । मस्तकसूच्यां ध्वस्तायां सर्वात्मना विनाशमुपैति सकलस्तालतरुः, एवं मोहनीये क्षीणे शेषं कर्म क्षयमेति सर्वम् ॥ ४ ॥

भा०— ततः क्षीणचतुःकर्मा, प्राप्तोऽथाख्यातसंयमम् ।
बीजबन्धननिर्मुक्तः, स्नातकः परमेश्वरः ॥ ५ ॥—अनु०

टी०—तत इत्यादि । क्षिप्तसकलघातिकर्मा यथाख्यातसंयममनुप्राप्तो बीजबन्धने-न-मोहनीयादिना विमुक्तः स्नातकोऽन्तर्मलापगमात् परमेश्वरः-केवलर्द्धिप्राप्तः ॥५ ॥

भा०—शेषकर्मफलापेक्षः, शुद्धो बुद्धो निरामयः ।
सर्वज्ञः सर्वदर्शी च, जिनो भवति केवली ॥ ६ ॥—अनु०

टी०—शेष इत्यादि । वेदनीयादिकर्मफलापेक्षः शुद्धो मोहादिमलापगमात् बुद्धः केवलज्ञानावाप्तेर्निरामयो-निर्गताशेषरोगनिदानः केवली भवति ॥ ६ ॥

भा०—कृत्स्नकर्मक्षयादूर्ध्वं, निर्वाणमधिगच्छति ।
यथा दग्धेन्धनो वह्नि-र्निरुपादानसन्ततिः ॥ ७ ॥— अनु०

टी०—कृत्स्नेत्यादि । सकलकर्मकलङ्कनिर्मुक्त ऊर्ध्वमेव निर्वाणमधिगच्छति । निर्वृतस्य स्थानमप्युपचारान्निर्वाणम् । अथवा निर्वाणं-निर्वृतत्वं सिद्धत्वं प्रक्षिप्तप्रदग्धेन्धनो वह्निरिव निरुद्धकाष्ठाद्युपादानसन्ततिः ॥ ७ ॥

भा०—दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः ।
कर्मबीजे तथा दग्धे, नारोहति भवाङ्कुरः ॥ ८ ॥—अनु०

टी०—दग्धे इत्यादि । बीजेऽत्यन्तं-भस्मसात्कृते नाङ्कुरस्य प्रादुर्भावः, एवं कर्मबीजे ध्वस्ते संसाराङ्कुरस्याप्रादुर्भावः ॥ ८ ॥

भा०—तदनन्तरमेवोर्ध्व—मालोकान्तात् स गच्छति ।
पूर्वप्रयोगासङ्गत्व-बन्धच्छेदोर्ध्वगौरवैः ॥ ९ ॥—अनु०

टी०—तदनन्तरेत्यादि । सकलकर्मक्षयसमनन्तरमालोकान्तादूर्ध्वं स गच्छति । कथं मुक्तस्य गतिरित्यारेकायामिदमाह—पूर्वप्रयोगादसङ्गत्वाद् बन्धच्छेदादूर्ध्वगौरवाच्च गतिरस्य भवति सिद्धा ॥ ९ ॥

पूर्वप्रयोगस्योदाहरणानि दर्शयति—

भा०—कुलालचक्रे दोलाया-मिषौ वाऽपि[1] यथेष्यते ।
पूर्वप्रयोगात् कर्मेह, तथा सिद्धिगतिः स्मृता ॥ १० ॥—अनु०

टी०—कुलालेत्यादि । पूर्वप्रयोगात् कर्म-क्रिया यथा कुलालचक्रादिषु तथा सिद्धगतिः स्मृता[2] ॥ १० ॥

भा०—मृल्लेपसङ्गनिर्मोक्षाद्, यथा दृष्टाऽप्स्वलाबुनः ।
कर्मसङ्गविनिर्मोक्षात्, तथा सिद्धिगतिः स्मृता ॥ ११ ॥—अनु०

टी०—मृल्लेपेत्यादि । अलाबुनोऽप्सून्मज्जनं दृष्टं मृल्लेपसङ्गनिर्मोक्षात् एवं कर्माष्टकसङ्गत्यागात् सिद्धगतिः सिद्धा ॥ ११ ॥

भा०—एरण्डयन्त्रपेडासु, बन्धच्छेदाद् यथा गतिः ।
कर्मबन्धनविच्छेदात्, सिद्धस्यापि तथेष्यते ॥ १२ ॥—अनु०

टी०—एरण्डेत्यादि । व्याघ्रपादबीजबन्धनच्छेदाद् यन्त्रबन्धनच्छेदाद् पेडाबन्धनच्छेदाच्च गतिर्दृष्टा मिञ्जाकाष्टपेडापुटानामेवं कर्मबन्धनविच्छेदात् सिद्धस्य गतिः ॥ १२ ॥

भा०—ऊर्ध्वगौरवधर्माणो, जीवा इति जिनोत्तमैः ।
अधोगौरवधर्माणः, पुद्गला इति चोदितम् ॥ १३ ॥—अनु०

टी०—ऊर्ध्वेत्यादि[3] । ऊर्ध्वगमन एव गौरवं धर्मः—स्वभावो जीवानाम् पुद्गलास्त्वधो गमनधर्माण इति सर्वज्ञवचनम् ॥ १३ ॥

भा०—यथाऽधस्तिर्यगूर्ध्वं च, लोष्टवाय्वग्निवीतयः[4] ।
स्वभावतः प्रवर्तन्ते, तथोर्ध्वं[5] गतिरात्मनाम् ॥ १४ ॥—अनु०

टी०—यथेत्यादि । यथाक्रममधोगमनादि । लोष्टानां[6] वीतयो-गतयः स्वभावादेव-जायन्ते तथोर्ध्वगतिरात्मनाम् ॥ १४ ॥

---

१ 'चापि' इति घ-पाठः । २ 'स्मृताः' इति ज-पाठः । ३ 'ऊर्ध्वमित्यादि' इति ज-पाठः । ४ 'वीचयः' इति ग-पाठः । ५ 'स्वभावगतिरात्मनः' इति ग-पाठः । ६ 'लोष्टत्ववीचयो' इति ग-पाठः ।

**भा०—अतस्तु गतिवैकृत्य-मेषां यदुपलभ्यते ।**
**कर्मणः प्रतिघाताच्च, प्रयोगाच्च तदिष्यते ॥ १५ ॥**

**टी०—अतस्त्वित्यादि** । अस्मादुक्तप्रकारादन्यथा **गतिवैकृत्यं** यद् भवति गतिविकाररूपं तत् **कर्मणः**–क्रियायाः **प्रतिघाताद्** गिरिभित्त्यादेः **प्रयोगाच्च** पुरुषेच्छानुविधाना**दिष्यते** सर्वम् ॥ १५ ॥

**भा०—अधस्तिर्यगथोर्ध्वं च, जीवानां कर्मजा गतिः ।**
**ऊर्ध्वमेव तु तद्धर्मा, भवति क्षीणकर्मणाम् ॥ १६ ॥**—अनु०

**टी०—अध इत्यादि** । सर्वतो गतिर्जीवानामधस्तिर्यगूर्ध्वं च **कर्मजा गतिः** । **क्षीणकर्मणां** तू**र्ध्वमेव** गतिस्त**द्धर्मा** सा स्वाभाविकी गतिर्धर्मो येषामिति ॥ १६ ॥

**भा०—द्रव्यस्य कर्मणो यद्व–दुत्पत्त्याऽऽरम्भ-[1]वीतयः ।**
**समं तथैव सिद्धस्य, गति-मोक्ष-भवक्षयाः ॥ १७ ॥**—अनु०

**टी०—द्रव्यस्येत्यादि** । **द्रव्यस्य**–परमाण्वादेः **कर्मणः**–क्रियाया यथोत्पत्तिरा**रम्भो** गतिश्च **समं**–युगपत् **तथा सिद्धस्य गतिमोक्षभवक्षयाः** गतिः मुक्तिर्**मोक्षः**–स्वात्मन्यवस्थानं **भवक्षयो**–जन्मक्षयः संसारक्षयो वेति ॥ १७ ॥

**भा०—उत्पत्तिश्च विनाशश्च, प्रकाश-तमसोरिह ।**
**युगपद् भवतो यद्वत्, तथा निर्वाण-कर्मणोः ॥ १८ ॥**—अनु०

**टी०—[2]उत्पत्तिश्चेत्यादि** । **प्रकाश-तमसो**र्यथा **युगप**दु**त्पत्ति-विनाशौ** । यस्मिन् काले प्रकाश उत्पद्यते तस्मिन्नेव काले तमसो विनाश इति **युगपद्** एवं **निर्वाणं कर्म**क्षयश्चेत्येक एव कालः । तथाऽन्यत्राप्युक्तम्—

> [3]स ततो बन्धनमोक्षादूर्ध्वं जीवः प्रवेगतो याति ।
> न त्वैरण्डकबीजं, बन्धनमुक्तं व्रजत्यूर्ध्वम् ॥ १ ॥—आर्या
> सङ्गत्यागाद् वा लघु–रात्मा भूत्वा स उत्पतत्यूर्ध्वम् ।
> न तु गतलेपालाबू–रुद्याति जले निमग्नाऽपि ॥ २ ॥–,,
> ध्यानेन तथा चात्मा, प्रयोजितो येन स व्रजत्यूर्ध्वम् ।
> तिष्ठासुरपि न शक्तः, प्रवेगितो ननु नरः स्थातुम् ॥ ३ ॥–"
> अपि चाग्नेरिव गमनं, स्वाभाविकमूर्ध्वमात्मनस्तस्य ।
> आत्माग्निशिखाया गति-रन्या कर्मानिलवशाद्धि ॥ ४ ॥—"

---

[1] 'वीचयः' इति ग–पाठः । [2] 'उत्पत्तिरित्यादि' इति च–ज–पाठः । [3] 'स सततो' इति च–ज–पाठः ।

स्ववशस्यानभिसन्धे-श्च तस्य न च विग्रहा गतिर्भवति ।
भवति हि विग्रहगमनं, कर्मवशस्यार्थिनश्चेह ॥ ५ ॥—आर्या
अपि चानुश्रेणिगति-र्जीवानां चैव पुद्गलानां च ।
स्वाभाविकीष्यते ये-न तेन सा विग्रहा सिद्धा ॥ ६ ॥—"
सिद्धस्य गतिरयुक्ता, स्ववशत्वान्निःप्रयोजनत्वाच्च ।
नो सिद्धावयुक्ता, कर्मविमुक्तस्य निःपततः ॥ ७ ॥—"
बन्धविमोक्षात् सङ्ग-त्यागात् पूर्वप्रयोगतो वाऽपि ।
ननु गच्छतोऽन्यवशता न च मुक्तोऽभीष्यते विवशः ॥ ८ ॥—"
इत्येवं विप्रलापो-ऽस्पृष्टगतौ नान्तरास्ति यत्कालः ।
सत्यां हि सोत्तराव-स्थायां स्यात् सिद्ध इतरो वा ॥ ९ ॥—"
सोऽस्पृष्टया हि गत्या-ऽनन्तरमेव समये जगच्छिखरम् ।
अवगाहतेतरां ते-न नास्ति ननु भो व्रजत्कालः ॥ १० ॥—"
सिध्यति गत्वा ह्यात्मा, सिद्धिक्षेत्रेऽपहाय देहमिह ।
नह्यन्तराऽस्ति सिद्धि-र्नासिद्धिश्चास्ति मुक्तस्य ॥ ११ ॥—"
स्ववशस्यानभिसन्धेः, कृतकृत्यस्य च यथा स्वभावेन ।
तस्योपयोग इष्ट-स्तथा गतिः सा स्वभावेन ॥ १२ ॥—"

अथ यस्याः पृथिव्या उपरि मुक्तानामवस्थानं सा किंस्वरूपेत्याह—

**भा०—तन्वी मनोज्ञा सुरभिः, पुण्या परमभास्वरा ।**
**प्राग्भारा नाम वसुधा, लोकमूर्ध्नि व्यवस्थिता ॥ १९ ॥—अनु०**

**टी०—तन्वीत्यादि** । मध्ये योजनाष्टकबहला प्रदेशपरिहाण्या चोपर्युपरि मक्षिकापत्रात् तनुतरा पर्यन्तेऽतितन्वी **मनोज्ञे**त्यन्तरुचिरा **सुरभिः**-इष्टगन्धा पुण्यवद्भिः पृथिवीकायिकै-र्निर्वर्तिता **पुण्या** भृशं भासनशीला **प्राग्भारेति नाम** तस्याः । सा च **लोकमूर्धनि व्यव-स्थिता** ॥ १९ ॥

**भा०—नृलोकतुल्यविष्कम्भा, सितच्छत्रनिभा शुभा ।**
**ऊर्ध्वं तस्याः क्षितेः सिद्धा, लोकान्ते समवस्थिताः ॥ २० ॥—अनु०**

**टी०—नृलोकेत्यादि** । नृलोकेऽर्धतृतीयद्वीपा मानुषोत्तरमहीधरपरिक्षिप्ता तत्तुल्यवि-ष्कम्भा, पञ्चचत्वारिंशद्योजनलक्षविस्तरेत्यर्थः । उत्तानीकृतसितच्छत्रकाकृतिः शुभरूपाया-त्मिका **शुभा तस्याः** क्षितेरुपरि लोकान्तस्पृशां सिद्धानामवस्थानम् ॥ २० ॥

---

१ 'स्याथिन' इति ज-पाठः । २ 'येन सेम ( ? ) सा विग्रहा०' इति ज-पाठः । ३ 'नो सिद्धता च युक्ता' इति ज-पाठः । ४ 'भीष्यति' इति ज-पाठः । ५ 'सुरभिगन्धा' इति ज-पाठः ।

**भा०—तादात्म्यादुपयुक्तास्ते, केवलज्ञानदर्शनैः ।**
**सम्यक्त्वसिद्धतावस्था, हेत्वभावाच्च निष्क्रियाः ॥ २१ ॥**—अनु०

**टी०—तादात्म्येत्यादि ।** स आत्मा स्वभावो येषां ते तदात्मानः तद्भावस्तादात्म्यं तस्मात् केवलज्ञानदर्शनस्वभावात् सदैव उपयुक्ताः क्षायिकसम्यक्त्वसिद्धतावस्थाः । **हेत्वभावाच्च निष्क्रियाः** क्रियापरिणामं प्रति न किञ्चित् तेषामस्ति निमित्तमिति ॥ २१ ॥

**भा०—ततोऽप्यूर्ध्वगतिस्तेषां, कस्मान्नास्तीति चेन्मतिः ।**
**धर्मास्तिकायस्याभावात् स हि हेतुर्गतेः परः ॥ २२ ॥**

**टी०—ततोऽप्यूर्ध्वमित्यादि ।** लोकान्तात् परतोऽपि **गतिस्तेषां कस्मान्न** भवतीति **चेत् गतेर्हेतुर्धर्मास्तिकायः परः**–प्रधानमपेक्षाकारणं तदभावान्न परतो गतिः ॥ २२ ॥

**भा०—संसारविषयातीतं, मुक्तानामव्ययं सुखम् ।**
**अव्याबाधमिति प्रोक्तं, परमं परमर्षिभिः ॥ २३ ॥**

**टी०—संसारेत्यादि ।** संसारविषयमतीतं **मुक्तानां सुखमव्ययत्वाद्** विगतव्याबाधं **परमं**–प्रकृष्टं **परमर्षिभिः**–तीर्थकरादिभिरभिहितम् ॥ २३ ॥

**भा०—स्यादेतदशरीरस्य, जन्तोर्नष्टाष्टकर्मणः ।**
**कथं भवति मुक्तस्य, सुखमित्यत्र मे शृणु[1] ॥ २४ ॥**

**टी०—स्यादेतदित्यादि ।** **नष्टाष्टकर्मणो** विगतयोगत्रयस्य कथमकरणस्य **सुख**-सम्भव **इत्यत्र मे शृणु** ॥ २४ ॥

**भा०—लोके चतुर्ष्विहार्थेषु, सुखशब्दः प्रयुज्यते ।**
**विषये वेदनाभावे, विपाके मोक्ष एव च ॥ २५ ॥**

**टी०—लोके इत्यादि ।** प्रतीतिं दर्शयति । सुखे विषयः शब्दादिः तथा दुःखवेदनाया-**भावे, कर्मविपाके** च सद्वेदनीयादिके । तथा सकलकर्मक्षयलक्षणे च **मोक्षे** ॥ २५ ॥

उदाहरणानि यथाक्रमं दर्शयति—

**भा०—सुखो वह्निः सुखो [illegible] –विषयेष्विह कथ्यते ।**
**दुःखाभावे च पुरुषः, सुखितोऽस्मीति मन्यते ॥ २६ ॥**

**टी०—सुखो वह्निरित्यादि ।** उदाहरणानि यथाक्रमं दर्शयति ॥ २६ ॥

**भा०—पुण्यकर्मविपाकाच्च, सुखमिष्टेन्द्रियार्थजम् ।**
**कर्मक्लेशविमोक्षाच्च, मोक्षे सुखमनुत्तमम् ॥ २७ ॥**

**टी०—पुण्यकर्मेत्यादि ।** गतार्थावेतौ[2] श्लोकौ ॥ २७ ॥

---

१ 'संशृणु' इति ग–पाठः । २ 'गतार्थावेव' इति ज–पाठः ।

भा०—सुखप्रसुप्तवत् केचि-दिच्छन्ति परिनिर्वृतिम् ।
तदयुक्तं क्रियावत्त्वात्, सुखानुशयतस्तथा ॥ २८ ॥

टी०—सुखप्रसुप्तेत्यादि । शोभनेन स्वात्मनः सुखनिद्रया सुप्तवदिच्छन्ति निर्वृतिं तदेतदयुक्तं योगवत्त्वात् क्रियावत्त्वात् तथा सुखानुशयाच्च । अनुशयः प्रकर्षापकर्षत्वम् ॥

भा० —श्रम-क्लम-मद-व्याधि-मदनेभ्यश्च सम्भवात् ।
मोहोत्पत्तेर्विपाकाच्च, दर्शनघ्नस्य कर्मणः ॥ २९ ॥

टी०—श्रमेत्यादि । श्रमः–खेदः क्लमो–ग्लानिः मदो–मद्यपानादिजनितः व्याधिः–ज्वरादिः मदनः–कामसेवनं एभ्यश्च सुखापसुप्तत्वस्य सम्भवात् रत्यरतिभयशोकादिको मोहस्तस्माच्च सुप्तत्वसम्भवः । दर्शनघ्नं–दर्शनावरणकर्म तस्य विपाकात्–उदयात् सुखप्रसुप्तत्वमिति । न चैतानि कारणानि मुक्तानां सम्भवन्ति ॥ २९ ॥

भा०—लोके तत्सदृशो ह्यर्थः, कृत्स्नेऽप्यन्यो न विद्यते ।
उपमीयेत[1] तद् येन, तस्मान्निरुपमं सुखम् ॥ ३० ॥

टी०—लोके इत्यादि । मोक्षसुखसदृशोऽर्थः सकलेऽपि लोके न क्वचिदस्ति ततोऽनुपमं तत् ॥

भा०—लिङ्गप्रसिद्धेः प्रामाण्या-दनुमानोपमानयोः ।
अत्यन्तं चाप्रसिद्धं तद्, यत् तेनानुपमं स्मृतम् ॥ ३१ ॥

टी०—लिङ्गेत्यादि । नाप्युपमानं तत्र क्रमते सादृश्याभावात् । सादृश्याख्यं लिङ्गं नास्ति मोक्षसुखस्य । नाप्यनुमानस्य मुक्तिसुखं गोचरीभवति । यस्मात्तस्य प्रामाण्यं लिङ्गप्रसिद्धेः कारणात् । पक्षधर्मान्वयव्यतिरेकयेव लिङ्गम् । न चास्ति तादृशो मोक्षसुखप्रतिपत्तावित्यतो नाप्यनुमेयम् ॥ ३१ ॥

भा०—प्रत्यक्षं तद्भगवता-मर्हतां तैः भाषितम् ।
गृह्यतेऽस्तीत्यतः प्राज्ञै-र्न छद्मस्थपरीक्षया ॥ ३२ ॥ इति

टी०—प्रत्यक्षमित्यादि । अर्हतां–सर्वज्ञानामेव तत् प्रत्यक्षं प्रत्यक्षीकृत्य च तैर्यथावद् भाषितं–व्यपेतरागद्वेषमोहैः श्रद्धेयवाक्यैः सर्वज्ञैरेव तदाख्यातम् । अतः सर्वज्ञप्रणीतागमप्रामाण्यात् तदस्तीति गृह्यते । प्रज्ञाऽसामर्थ्यान्न छद्मस्थपरीक्षया आगमव्यतिरिक्तैश्च छद्मस्थप्रत्यक्षादिभिः परीक्ष्यमाणं न जातुचिदुपलभ्यत इति ॥ ३२ ॥

एवमनुपममव्याबाधं च शाश्वतं स्वाभाविकं मुक्तिसुखमनुभवति क्षपितसकलकर्मजालः ।

---

१ ' उपनीयते ' इति ग–पाठः ।

**भा०—यस्त्विदानीं सम्यग्दर्शनज्ञानचरणसम्पन्नो भिक्षुर्मोक्षाय घटमानः कालसंहननायुर्दोषादल्पशक्तिः कर्मणां चातिगुरुत्वादकृतार्थ एवोपरमति स सौधर्मादीनां सर्वार्थसिद्धान्तानां कल्पविमानविशेषाणामन्यतमस्मिन् देवतयोपपद्यते ।**

टी०—यः पुनरधुना दुःखबहुलं संसारमवेक्ष्य तन्निःसरणकृतप्रयत्नः **सम्यग्दर्शनज्ञानचरणसम्पन्नो भिक्षुर्मोक्षाय घटमानो**–मोक्षार्थकृतोत्साहो दुःषमाकालदोषात् परिपेलवकीलिकासेवार्तसंहननदोषादनेकापायाल्पायुर्दोषाच्चाल्पशक्तिः–अतीव स्तोकवीर्यः **कर्मणां च**–मोहनीयादीनामतिगुरुत्वादिति तीव्रानुभावादकृतार्थ एव–अक्षपितकर्माष्टक एव **उपरमति**–कालं करोति स खल्पचितशुभराशिः **सौधर्मादीनां** द्वादशानां कल्पानां विमानानां च **सर्वार्थसिद्धान्तानामन्यतमस्मिन्** कल्पे विमाने वा **देवत्वायोपपद्यते**—देवत्वेनोपपद्यत इत्यर्थः ।

**भा०—तत्र सुकृतकर्मफलमनुभूय स्थितिक्षयात् प्रच्युतो देशजातिकुलशीलविद्याविनयविभवविषयविस्तरविभूतियुक्तेषु मनुष्येषु प्रत्यायातिमवाप्य पुनः सम्यग्दर्शनादिविशुद्धबोधिमवाप्नोति । अनेन सुखपरम्परायुक्तेन कुशलाभ्यासानुबन्धक्रमेण परं त्रिर्जनित्वा सिध्यतीति ॥**

टी०—**तत्र**–सौधर्मादिषु कल्पेषु विमानेषु वा **सुकृतकर्म**–पुण्यकर्म तस्य **फलं**–विपाकमनुभूयायुषः **स्थितिक्षयात् प्रच्युतो** मगधादावार्यदेशे क्षत्रियादौ मनुष्यजातौ इक्ष्वाकुकुलादिषु **शीलवत्सु**–सचेष्टेषु [1]**विद्या**–मुक्त्यनुगुणं ज्ञानं **विनयः**–अभ्युत्थानादिः **विभवः**-धन-धान्य-द्रविणसम्पत् **विषयाः**–शब्दादयः सर्वेषामेवैषां **विस्तरः**–प्राचुर्यं विस्तर एव **विभूतिस्तद्युक्तेषु प्रत्यायातिमवाप्य**–जन्म समधिगम्य **पुनः सम्यग्दर्शनादिविशुद्धं बोधिमवाप्नोति** । सम्यग्दर्शनमादिर्ययोर्ज्ञानचारित्रयोर्बोधिस्वरूपयोस्तं बोधिमवाप्नोति । ज्ञानचरणे बोधिशब्दवाच्ये समवाप्नोतीत्यर्थः । **अनेन**–उक्तलक्षणेन **कुशलाभ्यासानुबन्धक्रमेण सुखपरम्परायुक्तेन परं**–प्रकर्षतस्त्रिर्जनित्वा मनुष्यो देवः पुनर्मनुष्य इति एवं त्रीणि जन्मानि समवाप्य सम्यक्त्वज्ञानलाभादिहितसंवरस्तपसा क्षपितकर्मराशिः सिध्यति सिद्धिक्षेत्र इति । उक्तं च—

"एवं संवरवर्मा, पिनह्य सम्यक्त्ववाहमधिरूढः ।
सज्ज्ञानमहाचापो–ध्यानादितपःशितपृषत्कैः ॥ १ ॥—आर्या

---

१ 'विद्या सूक्त्य०' इति च–पाठः ।

संयमरणाजिरस्थः, क्लेशचमूः संविधूय भव्यात्मा ।
कर्मनृपरिपून् हत्वा-ऽपवर्गराज्यश्रियं लभते ॥ २ ॥—आर्या
एवं कर्मोदयजै-र्भावैः कर्मक्षयोपशमजैश्च ।
संसारमुवाचार्हन्, सिद्धिं कर्मक्षयादेव ॥ ३ ॥–"
ज्ञानं सुमार्गदीपं, सम्यक्त्वं तु तदविप्रणाशाय ।
चारित्रमास्रवत्वं, क्षपयति कर्माणि तु तपोऽग्निः ॥ ४ ॥–"
एतेन भवति सिद्धिः, सिद्धान्तचतुष्टयेन जिनवचने ।
न तु संवररहितस्य च, सा स्यान्न ज्ञानमात्रेण ॥ ५ ॥–"
इत्येकान्तसमेक-द्वीपं विविधं झपमेकपातालम् ।
अष्टग्राहं द्विरयं, चतुरावर्तं चतुःकूलम् ॥ ६ ॥–"
त्रिमहावातं त्र्युदयं, षड्वेगं चतुरशीतिनियतोर्मिम् ।
संसारार्णवमात्मा, नात्रा चतुरङ्गयोत्तरति ॥ ७ ॥–"

सम्प्रति वाचको निजाचार्यान्वयं द्विप्रकारमप्यावेदयते—

**भा०—वाचकमुख्यस्य शिव-श्रियः प्रकाशयशसः प्रशिष्येण ।**
**शिष्येण घोषनन्दि-क्षमाश्रमणस्यैकादशाङ्गविदः ॥ १ ॥**–गीतिः
**वाचनया च महावा-चकक्षमणमुण्डपादशिष्यस्य ।**
**शिष्येण वाचकाचा-र्यमूलनाम्नः प्रथितकीर्तेः ॥ २ ॥**—आर्या
**न्यग्रोधिकाप्रसूते-न विहरता पुरवरे कुसुमनाम्नि ।**
**कौभीषणिना स्वातित-नयेन वात्सीसुतेनार्घ्यम् ॥ ३ ॥**–"

टी०—तत्रायं प्रव्राजकान्वयः–शिवश्रीर्नाम वाचकः पितामहः सङ्ग्रहकारस्य, तस्य **शिष्यो घोषनन्दिक्षमण**स्तस्यायं सङ्ग्रहकारः शिष्यः । सम्प्रति वाचनाचार्यान्वयो **मुण्डपादो** नाम महावाचकः **क्षमणः** सोऽस्य पितामहः सङ्ग्रहकारस्य । तस्य शिष्यो **मूलनामा** वाचकस्तस्यायं सङ्ग्रहकारः शिष्यः । सम्प्रत्यात्मीयजन्मान्वयस्थानमाचष्टे—**न्यग्रोधिका** नाम ग्रामस्तत्र जातेन पाटलिपुत्रे **कुसुमपुरनाम्नि विहरता । कौभीषणिनेति** गोत्राख्यानम्, **स्वातितनयेनेति** पितुराख्यानम्, **वात्सीसुतेनेति** गोत्रेण नाम्ना उमेति मातुराख्यानम् ॥

**भा०—अर्हद्वचनं सम्यग्, गुरुक्रमेणागतं समवधार्य ।**
**दुःखार्तं च दुरागम-विहतमतिलोकमवलोक्य ॥ ४ ॥**—आर्या

१ 'मवाप्या' इति ज-पाठः । २ 'वाचकाचार्यान्वयो' इति ग-पाठः । ३ 'समुपधार्य' इति घ-पाठः ।

इदमुच्चैर्नागरवा--चकेन सत्त्वानुकम्पया दृब्धम् ।
तत्त्वार्थाधिगमाख्यं, स्पष्टमुमास्वातिना शास्त्रम् ॥ ५ ॥—आर्या
यस्तत्त्वाधिगमाख्यं, ज्ञास्यति च करिष्यते च तत्रोक्तम् ।
सोऽव्याबाधं सौख्यं, प्राप्स्यत्यचिरेण परमार्थम् ॥ ६ ॥—आर्या

टी०—सम्प्रदायाविच्छेदेनायातमर्हद्वचनं सम्यगवधार्य शारीरैर्मानसैश्च दुःखैरार्तं दुरागमैरैहिकसुखोपदेशप्रायैस्त्रयैः प्रभृतिभिः प्रमाणविघट्टनायामक्षमैर्विहतमतिम्–उपहत-विज्ञानमवलोक्य लोकमुच्चैर्नागरवाचकेनेति स्वशाखासूचकं तत्त्वार्थाधिगमाख्यं शास्त्रं भव्यसत्त्वानुकम्पया विरचितं स्फुटार्थमुमास्वातिनेति । तदेतच्छास्त्रं जीवादितत्त्वाधि-गमार्थं योऽवभोत्स्यते सूत्रतोऽर्थतश्चानुष्ठास्यति तत्रोक्तं सोऽव्याबाधसुखलक्षणमनन्तमनुपमं परमार्थं मोक्षमचिरेण प्राप्स्यतीति ॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसंग्रहे भाष्यानुसारिण्यां वृत्तौ
मोक्षस्वरूपनिरूपको दशमोऽध्यायः ॥ १० ॥

॥ तत्समाप्तौ च समाप्तेयं तत्त्वार्थटीका ॥

आसीद् दिन्नगणिः क्षमाश्रमणतां प्रापत् क्रमेणैव यो
विद्वत्सु प्रतिभागुणेन जयिना प्रख्यातकीर्तिर्भृशम् ।
वोढा शीलभरस्य सच्छ्रुतनिधिर्मोक्षार्थिनामग्रणी-
र्जज्वालामलमुच्चकैर्निजतपस्तेजोभिरव्याहतम् ॥ १ ॥—शार्दूल०
यत्र स्थितं प्रवचनं, पुस्तकनिरपेक्षमक्षतं विमलम् ।
शिष्यगणसम्प्रदेयं, जिनेन्द्रवक्त्राद् विनिष्क्रान्तम् ॥ २ ॥—आर्या
तस्याभूत् परवादिनिर्जयपटुः सैंहीं दधच्छूरतां
नाम्ना व्यज्यत सिंहसूर इति च ज्ञाताखिलार्थागमः ।
शिष्यः शिष्टजनप्रियः प्रियहितव्याहारचेष्टाश्रयाद्
भव्यानां शरणं भवौघपतनक्लेशार्दितानां भुवि ॥ ३ ॥—शार्दूल०
निर्धूततमःसंहति–रखण्डमण्डलशशाङ्कसच्छाया ।
अद्यापि यस्य कीर्ति--र्भ्रमति दिगन्तानविश्रान्ता ॥ ४ ॥—आर्या
शिष्यस्तस्य बभूव रांजि( ज? )कशिरोरत्नप्रभाजालक-
व्यासङ्गाच्छुरितस्फुरन्नखमणिप्रोद्भासिपादद्वयः ।

१ 'गणी' इति ज–पाठः । २ 'पदः' इति ङ पाठः । ३ 'राजत' इति च–पाठः । ४ 'जातक' इति ञ–पाठः । ५ 'सङ्गच्छुरित०' इति च–पाठः ।

भास्वामीति विजित्य नाम जगृहे यस्तेजसां सम्पदा
भास्वन्तं भवनिर्जयोद्यतमतिर्विद्वज्जनाग्रेसरः ॥ ५ ॥—शार्दूल०
क्षमया युक्तोऽतुलया, समस्तशास्त्रार्थविन्महाश्रमणः ।
गच्छाधिपगुणयोगाद् गुणाधिपत्यं चकाराध्यम् ॥ ६ ॥—आर्या
तत्पादरजोवयवः, स्वल्पागमशेमुषीकबहुजाड्यः ।
**तत्त्वार्थशास्त्र**टीका--मिमां व्यधात् **सिद्धसेनगणिः** ॥ ७ ॥--"
अष्टादशसहस्राणि, द्वे शते च तथा परे ।
अशीतिरधिका द्वाभ्यां, टीकायाः श्लोकसंग्रहः ॥ ८ ॥[२]—अनु०
मूलसूत्रप्रमाणं हि, द्विशतं किञ्चिदूनकम् ।
भाष्यश्लोकस्य मानं च, द्वाविंशतिशतानि वै ॥ ९ ॥–"

इति श्रीतत्त्वार्थाधिगमटीका समाप्ता ॥ अङ्कतोऽपि श्लोकसंख्या २०६८० ।

१ 'व्याधां' इति ग-पाठः । २ अतःपरं केवलमयमेव उल्लेखो ज-प्रतौ—'ग्रन्थाग्रन्थ १८२८२ सव संख्या शुभं भवतु । इति श्रीतत्त्वार्थटीका समाप्ता' ।

# सूत्रक्रमेणान्तराधिकारसूचा

## सप्तमोऽध्यायः ७

## नवमोऽध्यायः ९

---

# श्वेताम्बरीय-दिगम्बरीय[1]सूत्रपाठभेदसूची

## प्रथमोऽध्यायः

| सूत्राङ्कः | सूत्रपाठः (श्वेताम्बराम्नायः) | सूत्राङ्कः | सूत्रपाठः (दिगम्बराम्नायः) |
|---|---|---|---|
| १ | मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानम् । | १ | मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम् । |
| १५ | अवग्रहेहापायधारणाः । | १५ | अवग्रहेहावायधारणाः |
| २१ | द्विविधोऽवधिः । | * | * |
| २२ | भवप्रत्ययो नारकदेवानाम् । | २१ | भवप्रत्ययोऽवधिर्देवनारकाणाम् । |
| २३ | यथोक्तनिमित्तः षड्विकल्पः शेषाणाम् | २२ | क्षयोपशमनिमित्तः षड्विकल्पः शेषाणाम् । |
| २४ | ऋजुविपुलमती मनःपर्यायः ।* | २३ | ऋजुविपुलमती मनःपर्ययः । |
| २६ | विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्याययोः । | २५ | विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्यययोः । |
| २७ | मतिश्रुतयोर्निबन्धः सर्वद्रव्येष्वसर्वपर्यायेषु । | २६ | मतिश्रुतयोर्निबन्धो द्रव्येष्वसर्वपर्यायेषु । |
| २९ | तदनन्तभागे मनःपर्यायस्य । | २८ | तदनन्तभागे मनःपर्ययस्य । |
| ३४ | नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दा नयाः । | ३३ | नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूता नयाः । |

## द्वितीयोऽध्यायः

| सूत्राङ्कः | सूत्रपाठः (श्वेताम्बराम्नायः) | सूत्राङ्कः | सूत्रपाठः (दिगम्बराम्नायः) |
|---|---|---|---|
| ५ | ज्ञानाज्ञानदर्शनदानादिलब्धयश्चतुस्त्रित्रिपञ्चभेदा यथाक्रमं सम्यक्त्वचारित्रसंयमासंयमाश्च | ५ | ज्ञानाज्ञानदर्शनलब्धयश्चतुस्त्रित्रिपञ्चभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च । |
| ६ | गतिकषायलिङ्गमिथ्यादर्शनाज्ञानासंयतासिद्धत्वलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः । | ६ | गतिकषायलिङ्गमिथ्यादर्शनाज्ञानासंयतासिद्धलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः । |
| ७ | जीवभव्याभव्यत्वादीनि च । | ७ | जीवभव्याभव्यत्वानि च । |
| १३ | पृथिव्यम्बुवनस्पतयः स्थावराः । | १३ | पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः । |
| १४ | तेजोवायू द्वीन्द्रियादयश्च त्रसाः । | १४ | द्वीन्द्रियादयस्त्रसाः । |
| १९ | उपयोगः स्पर्शादिषु । | * | * * |

---

१ अनेन **तत्त्वार्थराजवार्तिकं** ज्ञेयम् ।

| सूत्राङ्कः | सूत्रपाठः | सूत्राङ्कः | सूत्रपाठः |
|---|---|---|---|
| | श्वेताम्बराम्नायः | | दिगम्बराम्नायः |
| २१ | स्पर्शरसगन्धवर्णशब्दास्तेषामर्थाः । | २० | स्पर्शरसगन्धवर्णशब्दास्तदर्थाः । |
| २३ | वाय्वन्तानामेकम् । | २२ | वनस्पत्यन्तानामेकम् । |
| ३० | एकसमयोऽविग्रहः । | २९ | एकसमयाविग्रहा । |
| ३१ | एकं द्वौ वाऽनाहारकः । | ३० | एकं द्वौ त्रीन् वाऽनाहारकः । |
| ३२ | सम्मूर्च्छनगर्भोपपाता जन्मः । | ३१ | सम्मूर्छनगर्भोपपादाजन्म । |
| ३४ | जराय्वण्डपोतजानां गर्भः । | ३३ | जरायुजाण्डजपोतानां गर्भः । |
| ३५ | नारकदेवानामुपपातः । | ३४ | देवनारकाणामुपपादः |
| ३७ | औदारिकवैक्रियाहारकतैजसकार्मणानि शरीराणि । | ३६ | औदारिकवैक्रियिकाहारकतैजसकार्मणानि शरीराणि । |
| ४१ | अप्रतिघाते । | ४० | अप्रतीघाते । |
| ४४ | तदादीनि भाज्यानि युगपदेकस्या चतुर्भ्यः । | ४३ | तदादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः । |
| ४७ | वैक्रियमौपपातिकम् | ४६ | औपपादिकं वैक्रियिकम् । |
| | * * | ४८ | तैजसमपि । |
| ४९ | शुभं विशुद्धमव्याघाति चाहारकं चतुर्दशपूर्वधर एव । | ४९ | शुभं विशुद्धमव्याघाति चाहारकं प्रमत्तसंयतस्यैव । |
| | * * | ५२ | शेषास्त्रिवेदाः । |
| ५२ | औपपातिकचरमदेहोत्तमपुरुषासङ्ख्येयवर्षायुषोऽनपवर्त्यायुषः । | ५३ | औपपादिकचरमोत्तमदेहासङ्ख्येयवर्षायुषोऽनपवर्त्यायुषः । |

## तृतीयोऽध्यायः ।

| सूत्राङ्कः | श्वेताम्बराम्नायः | सूत्राङ्कः | दिगम्बराम्नायः |
|---|---|---|---|
| १ | रत्नशर्करावालुकापङ्कधूमतमोमहातमःप्रभा भूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्ताधोऽधः पृथुतराः | १ | रत्नशर्करावालुकापङ्कधूमतमोमहातमःप्रभा भूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्ताधोऽधः । |
| २ | तासु नरकाः । | २ | तासु त्रिंशत्पञ्चविंशतिपञ्चदशदशत्रिपञ्चोनैकनरकशतसहस्राणि पञ्च चैव यथाक्रमम् । |
| ३ | [तेषु नारकाः] नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः । | ३ | नारका नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः । |

| सूत्राङ्कः | सूत्रपाठः | सूत्राङ्कः | सूत्रपाठः |
|---|---|---|---|
| | श्वेताम्बराम्नायः | | दिगम्बराम्नायः |
| ७ | जम्बूद्वीपलवणादयः शुभनामानो द्वीपसमुद्राः । | ७ | जम्बूद्वीपलवणोदादयः शुभनामानो द्वीपसमुद्राः । |
| १० | तत्र भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षाः क्षेत्राणि । | १० | भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षाः क्षेत्राणि । |
| * | * | १२ | हेमार्जुनतपनीयवैडूर्यरजतहेममयाः । |
| * | * | १३ | मणिविचित्रपार्श्वा उपरि मूले च तुल्यविस्ताराः । |
| * | * | १४ | पद्ममहापद्मतिगिञ्छकेसरिमहापुण्डरीकपुण्डरीका |
| * | * | | ह्रदास्तेषामुपरि । |
| * | * | १५ | प्रथमो योजनसहस्रायामस्तदर्धविष्कम्भो ह्रदः । |
| * | * | १६ | दशयोजनावगाहः । |
| * | * | १७ | तन्मध्ये योजनं पुष्करम् । |
| * | * | १८ | तद्द्विगुणद्विगुणा ह्रदाः पुष्कराणि च । |
| * | * | १९ | तन्निवासिन्यो देव्यः श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्यः पल्योपमस्थितयः ससामानिकपरिषत्काः । |
| * | * | २० | गङ्गासिन्धुरोहिद्रोहितास्याहरिद्धरिकान्तासीतासीतोदानारीनरकान्तासुवर्णरूप्यकूलारक्तारक्तोदाः सरितस्तन्मध्यगाः । |
| * | * | २१ | द्वयोर्द्वयोः पूर्वाः पूर्वगाः । |
| * | * | २२ | शेषास्त्वपरगाः । |
| * | * | २३ | चतुर्दशनदीसहस्रपरिवृता गङ्गासिन्ध्वादयो नद्यः । |
| * | * | २४ | भरतः षड्विंशतिपञ्चयोजनशतविस्तारः षट् चैकोनविंशतिभागा योजनस्य । |
| * | * | २५ | तद्द्विगुणद्विगुणविस्तारा वर्षधरवर्षा विदेहान्ताः । |
| * | * | २६ | उत्तरा दक्षिणतुल्याः । |
| * | * | २७ | भरतैरावतयोर्वृद्धिह्रासौ षट्समयाभ्यामुत्सर्पिण्यवसर्पिणीभ्याम् । |
| * | * | २८ | ताभ्यामपरा भूमयोऽवस्थिताः । |

१ तत्त्वार्थश्लोकवार्तिकेऽस्य चतुर्दशसूत्ररूपेण पृथग् निर्देशः ।

